सहस्रधामन्विशिखान्विग्रीवां छाययां त्वम् ।
प्रति स्म चक्रुषे कृत्यां प्रियां प्रियावते हर ॥४॥
अनयाहमोषध्या सर्वाः कृत्या अदूदुषम् ।
यां क्षेत्रे चक्रुर्यां गोषु यां वा ते पुरुषेषु ॥५॥
यश्चकार न शशाक कर्तुं शश्रे पादमङ्गुरिम् ।
चकार भद्रमस्मभ्यमात्मने तपनं तु सः ॥६॥
अपामार्गोऽप मार्ष्टु क्षेत्रियं शपथश्च यः ।
अपाह यातुधानीरप सर्वा अराय्यः ॥७॥
अपमृज्य यातुधानानप सर्वा अराय्यः ।
अपामार्ग त्वया वयं सर्वं तदप मृज्महे ॥८॥

सहस्रऽधामन् । विऽशिखान् । विऽग्रीवान् । शायय । त्वम् ।
प्रति । स्म । चक्रुषे । कृत्याम् । प्रियाम् । प्रियऽवते । हर ॥ ४ ॥

अनया । अहम् । ओषध्या । सर्वाः । कृत्याः । अदूदुषम् ।
याम् । क्षेत्रे । चक्रुः । याम् । गोषु । याम् । वा । ते । पुरुषेषु ॥ ५ ॥

यः । चकार । न । शशाक । कर्तुम् । शश्रे । पादम् । अङ्गुरिम् ।
चकार । भद्रम् । अस्मभ्यम् । आत्मने । तपनम् । तु । सः ॥ ६ ॥

अपामार्गः । अप । मार्ष्टु । क्षेत्रियम् । शपथः । च । यः ।
अप । अह । यातुऽधानीः । अप । सर्वाः । अराय्यः ॥ ७ ॥

अपऽमृज्य । यातुऽधानान् । अप । सर्वाः । अराय्यः ।
अपामार्ग । त्वया । वयम् । सर्वम् । तत् । अप । मृज्महे ॥ ८ ॥

(१९) एकोनविंशं सूक्तम्

(१-८) अष्टर्चस्यास्य सूक्तस्य शुक्र ऋषिः । अपामार्गवनस्पतिर्देवता । (१, ३-८) प्रथमर्चस्तृतीयादिषण्णाञ्चानुष्टुप्, (२) द्वितीयायाश्च पथ्यापङ्क्तिश्छन्दसी ॥

उतो अस्यबन्धुकृदुतो असि नु जामिकृत् ।
उतो कृत्याकृतः प्रजां नडमिवा छिन्धि वार्षिकम् ॥१॥

उतो इति । असि । अबन्धुऽकृत् । उतो इति । असि । नु । जामिऽकृत् ।
उतो इति । कृत्याऽकृतः । प्रऽजाम् । नडम्ऽइव । आ । छिन्धि । वार्षिकम् ॥ १ ॥

# Kāṇḍa VI

## षष्ठं काण्डम्

# अथ षष्ठं काण्डम् ॥

( १ ) प्रथमं सूक्तम्

(१–३) तृचस्यास्य सूक्तस्याथर्वा ऋषिः । सविता देवता । (१) प्रथमर्चस्त्रिपदा पिपीलिकमध्या साम्नी जगती, (२–३) द्वितीयातृतीययोश्च पिपीलिकमध्या पुर उष्णिक् छन्दसी ॥

**दोषो गाय बृहद्गाय द्युमद्धेहि । आथर्वण स्तुहि देवं सवितारम् ॥१॥**
**तमु ष्टुहि यो अन्तः सिन्धौ सूनुः । सत्यस्य युवानमद्रोघवाचं सुशेवम् ॥२॥**
**स घा नो देवः सविता साविषदमृतानि भूरि । उभे सुष्टुती सुगातवे ॥३॥**

दोषो इति । गाय । बृहत् । गाय । द्युऽमत् । धेहि ।
आथर्वण । स्तुहि । देवम् । सवितारम् ॥ १ ॥

तम् । ऊं इति । स्तुहि । यः । अन्तः । सिन्धौ । सूनुः ।
सत्यस्य । युवानम् । अद्रोघऽवाचम् । सुऽशेवम् ॥ २ ॥

सः । घ । नः । देवः । सविता । साविषत् । अमृतानि । भूरि ।
उभे इति । सुस्तुती इति सुऽस्तुती । सुऽगातवे ॥ ३ ॥

( २ ) द्वितीयं सूक्तम्

(१–३) तृचस्यास्य सूक्तस्याथर्वा ऋषिः । सोमो वनस्पतिर्देवता । परोष्णिक् छन्दः ॥

**इन्द्राय सोममृत्विजः सुनोता च धावत । स्तोतुर्यो वचः शृणवद्धवं च मे ॥१॥**

इन्द्राय । सोमम् । ऋत्विजः । सुनोत । आ । च । धावत
स्तोतुः । यः । वचः । शृणवत् । हवम् । च । मे ॥ १ ॥



## Savita

**VI.1.1** Sing in the evening (dōṣaḥ); sing loudly for long; adopt the shining one. O persevering devotee, praise the divine inspirer Lord.

**VI.1.2** Praise him, who is the impeller towards truth in the midst of the ocean, who is young, is free from malicious speech, and is bestower of bliss.

**VI.1.3** May He, the divine inspirer Lord, indeed, bestow plenty of ambrosia (amrtāni) on us, so that we may travel along both the paths comfortably.

## Somaḥ - Vanaspatiḥ

**VI.2.1** O performers of sacrifices according to seasons, press out devotional bliss and clean it carefully for the resplendent Lord, who will listen to the words and invocation of mine, an adorer.

आ यं विशन्तीन्दवो वयो न वृक्षमन्धसः । विरप्शिन्वि मृधो जहि रक्षस्विनीः ॥२॥
सुनोता सोमपाव्ने सोममिन्द्राय वज्रिणे । युवा जेतेशानः स पुरुष्टुतः ॥३॥

आ । यम् । विशन्ति । इन्दवः । वयः । न । वृक्षम् । अन्धसः ।
विऽरप्शिन् । वि । मृधः । जहि । रक्षस्विनीः ॥ २ ॥
सुनोत । सोमऽपाव्ने । सोमम् । इन्द्राय । वज्रिणे ।
युवा । जेता । ईशानः । सः । पुरुऽस्तुतः ॥ ३ ॥

(३) तृतीयं सूक्तम्

(१-३) स्वस्त्ययनस्य सूक्तस्याथर्वा ऋषिः । मन्त्रोक्ता देवताः । (१) प्रथमर्चः पथ्याबृहती, (२-३) द्वितीयातृतीययोश्च जगती छन्दसी ॥

पातं न इन्द्रापूषणादितिः पान्तु मरुतः ।
अपां नपात्सिन्धवः सप्त पातन पातु नो विष्णुरुत द्यौः ॥१॥
पातां नो द्यावापृथिवी अभिष्टये पातु ग्रावा पातु सोमो नो अंहसः ।
पातु नो देवी सुभगा सरस्वती पात्वग्निः शिवा ये अस्य पायवः ॥२॥
पातां नो देवाश्विना शुभस्पती उषासानक्तोत न उरुष्यताम् ।
अपां नपादभिह्रुती गयस्य चिद्देव त्वष्टर्वर्धय सर्वतातये ॥३॥

पातम् । नः । इन्द्रापूषणा । अदितिः । पान्तु । मरुतः ।
अपाम् । नपात् । सिन्धवः । सप्त । पातन । पातु । नः । विष्णुः । उत । द्यौः ॥ १ ॥
पाताम् । नः । द्यावापृथिवी इति । अभिष्टये । पातु । ग्रावा । पातु । सोमः । नः । अंहसः ।
पातु । नः । देवी । सुऽभगा । सरस्वती । पातु । अग्निः । शिवाः । ये । अस्य । पायवः ॥
पाताम् । नः । देवा । अश्विना । शुभः । पती इति । उषसानक्ता । उत । नः ।
उरुष्यताम् । अपाम् । नपात् । अभिह्रुती इत्यभिऽह्रुती । गयस्य । चित् । देव । त्वष्टः ।
वर्धय । सर्वऽतातये ॥ ३ ॥



**VI.2.2** O exuberant hero, to whom go the drops of nourishing devotional bliss from all around, as the birds to a tree, may you destroy demoniac enemies

**VI.2.3** Press out devotional bliss carefully for the resplendent Lord, the enjoyer of devotional bliss, wielder of his adamantine weapon. He is young, victorious, overloarding and praised by all.

## Indra - Pūsan Pair

**VI.3.1** May the Lord resplendent and nourisher protect us; may the existence indivisible (earth - aditi) and the cloud-bearing winds (maruts) protect. May the grandson of waters (i.e., apām napāt or fire) and seven rivers (sindhavaḥ ) protect us. May the sacrifice (viṣṇuḥ) and the sky protect us. (Yajño vai viṣṇuh - viṣṇu - yajna = sacrifice)

**VI.3.2** May heaven and earth protect us for assistance (abhiṣṭaye); may the mountain (grāvā) protect; may the devotional bliss protect us from sin. May the heavenly learning divine, full of good fortune, protect us. May the adorable Lord, and his benign protecting powers preserve us.

**VI.3.3** May the two divine healers (aśvinau) protect us. May dawn and night (uṣāsā-naktā), mistresses of light, also, bring happiness to us. May the grand-son of waters (i.e., the fire) protect our house from any damage; O cosmic architect (tvaṣṭṛ), may you exalt us for our all-round expansion.

(४) चतुर्थं सूक्तम्

(१-३) त्र्यृचस्यास्य सूक्तस्याथर्वा ऋषिः । मन्त्रोक्ता देवताः । (१) प्रथमर्चः पथ्याबृहती, (२) द्वितीयायाः संस्तारपङ्क्तिः, (३) तृतीयायाश्च त्रिपदा विराड्गायत्री छन्दांसि ॥

त्वष्टा मे दैव्यं वचः पर्जन्यो ब्रह्मणस्पतिः ।
पुत्रैर्भ्रातृभिरदितिर्नु पातु नो दुष्टरं त्रायमाणं सहः ॥१॥
अंशो भगो वरुणो मित्रो अर्यमादितिः पान्तु मरुतः ।
अप तस्य द्वेषो गमेदभिह्रुतो यावयच्छत्रुमन्तितम् ॥२॥
धिये समश्विना प्रावतं न उरुष्या ण उरुज्मन्नप्रयुच्छन् ।
द्यौ३ष्पितर्यावय दुच्छुना या ॥३॥

त्वष्टा । मे । दैव्यम् । वचः । पर्जन्यः । ब्रह्मणः । पतिः ।
पुत्रैः । भ्रातृऽभिः । अदितिः । नु । पातु । नः । दुस्तरम् । त्रायमाणम् । सहः ॥ १ ॥
अंशः । भगः । वरुणः । मित्रः । अर्यमा । अदितिः । पान्तु । मरुतः ।
अप । तस्य । द्वेषः । गमेत् । अभिऽह्रुतः । यवयत् । शत्रुम् । अन्तितम् ॥२॥
धिये । सम् । अश्विना । प्र । अवतम् । नः । उरुष्य । नः ।
उरुऽज्मन् । अप्रऽयुच्छन् । द्यौः । पितः । यवय । दुच्छुना । या ॥ ३ ॥

(५) पञ्चमं सूक्तम्

(१-३) त्र्यृचस्यास्य सूक्तस्याथर्वा ऋषिः । (१, ३) प्रथमातृतीययोर्ऋचोरग्निः, (२) द्वितीयायाश्चेन्द्रो देवते । (१, ३) प्रथमातृतीययोरनुष्टुप्, (२) द्वितीयायाश्च भुरिगनुष्टुप् छन्दसी ॥

उदेनमुत्तरं नयाग्ने घृतेनाहुत । समेनं वर्चसा सृज प्रजया च बहुं कृधि ॥१॥
इन्द्रेमं प्रतरं कृधि सजातानामसद्वशी । रायस्पोषेण सं सृज जीवातवे जरसे नय ॥२॥

उत् । एनम् । उत्ऽतरम् । नय । अग्ने । घृतेन । आऽहुत ।
सम् । एनम् । वर्चसा । सृज । प्रऽजया । च । बहुम् । कृधि ॥ १ ॥
इन्द्र । इमम् । प्रऽतरम् । कृधि । सऽजातानाम् । असत् । वशी ।
रायः । पोषेण । सम् । सृज । जीवातवे । जरसे । नय ॥ २ ॥



## Tvaṣṭṛ and others

**VI.4.1** May the supreme mechanic, the Lord supreme and the Lord of rains listen to my godly prayers. May the indivisible one (aditi, the earth), along with her sons and brothers, protect our saving power, difficult to overcome.

**VI.4.2** May the Lord of illumination (aṅśaḥ), the Lord of wealth and glory (bhagaḥ), the venerable Lord, the friendly Lord, the eternal law-giver, the indivisible one (aditi) and cloud-bearing winds protect us. May the injuring malice of that (foe) be removed far and may that enemy be cast away from us.

**VI.4.3** May you, O twins divine, protect us for good actions (dhiye). O wide-moving, may you guard us with unceasing care. O Heaven, our father, keep misfortunes whatsoever away from us.

## Agni

**VI.5.1** O fire divine, augmented with oblations of clarified butter, may you lift this (sacrificer) up higher and higher. May you endow him with lustre and bless him with plenty of offsprings

## Indra

**VI.5.2** O resplendent Lord, may you augment this sacrificer, so that he may have sway over his kinsmen. May you endow him with riches and nourishment; lead him to ripe old age for (enjoyment of) long life.

यस्य कृण्मो हविर्गृहे तमग्ने वर्धया त्वम् । तस्मै सोमो अधि ब्रवदयं च ब्रह्मणस्पतिः ॥३॥

यस्य । कृण्मः । हविः । गृहे । तम् । अग्ने । वर्धय । त्वम् ।
तस्मै । सोमः । अधि । ब्रवत् । अयम् । च । ब्रह्मणः । पतिः ॥ ३ ॥

(६) षष्ठं सूक्तम्

(१-३) वृषस्यास्य सूक्तस्याथर्वा ऋषिः । (१) प्रथमर्चो ब्रह्मणस्पतिः, (२-३) द्वितीयातृतीययोश्च सोमो देवते । अनुष्टुप् छन्दः ॥

योऽस्मान्ब्रह्मणस्पतेऽदेवो अभिमन्यते । सर्वं तं रन्धयासि मे यजमानाय सुन्वते ॥१॥
यो नः सोम सुशंसिनो दुःशंस आदिदेशति । वज्रेणास्य मुखे जहि स संपिष्टो अपायति ॥२॥
यो नः सोमाभिदासति सनाभिर्यश्च निष्ट्यः । अप तस्य बलं तिर महीव द्यौर्वधत्मना ॥३॥

यः । अस्मान् । ब्रह्मणः । पते । अदेवः । अभिऽमन्यते ।
सर्वम् । तम् । रन्धयासि । मे । यजमानाय । सुन्वते ॥ १ ॥
यः । नः । सोम । सुऽशंसिनः । दुःऽशंसः । आऽदिदेशति ।
वज्रेण । अस्य । मुखे । जहि । सः । सम्ऽपिष्टः । अप । अयति ॥ २ ॥
यः । नः । सोम । अभिऽदासति । सऽनाभिः । यः । च । निष्ट्यः ।
अप । तस्य । बलम् । तिर । महीऽइव । द्यौः । वधत्मना ॥ ३ ॥

(७) सप्तमं सूक्तम्

(१-३) वृषस्यास्य सूक्तस्याथर्वा ऋषिः । (१-२) प्रथमाद्वितीययोर्ऋचोः सोमः, (३) तृतीयायाश्च विश्वे देवा देवताः । (१) प्रथमाया निचृद्गायत्री, (२-३) द्वितीयातृतीययोश्च गायत्री छन्दसी ॥

येन सोमादितिः पथा मित्रा वा यन्त्यद्रुहः । तेना नोऽवसा गहि ॥१॥

येन । सोम । अदितिः । पथा । मित्राः । वा । यन्ति । अद्रुहः ।
तेन । नः । अवसा । आ । गहि ॥ १ ॥



## Agni

**VI.5.3** In whose house we perform sacrifice, O adorable Lord, may you augment him in every way. May the blissful Lord bless him and so also this Lord of divine knowledge (brahmaṇaspati)

## Brahmaṇaspati

**VI.6.1** O lord of knowledge divine, whosoever an undivine person plans to harm us, may you subjugate every such person to one, the sacrificer, the offerer of devotional bliss.

## Soma

**VI.6.2** Whoever a person of bad (ill) fame wants to Lord it over us, the persons of good fame, may you, O blissful Lord, strike on his face with your adamantine weapon, so that being crushed, he may vanish.

**VI.6.3** O blissful Lord, whosoever a person whether a kinsman or a stranger, wants to enslave us, may you draw away his strength with your killing weapon just like the mighty sky.

## Soma

**VI.7.1** O blissful Lord, by which path-way the earth and the suns (ādityāḥ of twelve months) move never hostile (to each other), thereby may you come to us with help.

येन सोम साहन्त्यासुरान्रन्धयासि नः । तेना नो अधि वोचत ॥२॥
येन देवा असुराणामोजांस्यवृणीध्वम् । तेना नः शर्म यच्छत ॥३॥

येन । सोम । साहन्त्य । असुरान् । रन्धयासि । नः ।
तेन । नः । अधि । वोचत ॥ २ ॥
येन । देवाः । असुराणाम् । ओजांसि । अवृणीध्वम् ।
तेन । नः । शर्म । यच्छत ॥ ३ ॥

( ८ ) अष्टमं सूक्तम्

(१-३) वृषस्वान्स्य सूक्तस्य जमदग्निर्ऋषिः । कामात्मा देवता । पथ्यापङ्क्तिश्छन्दः ॥

यथा वृक्षं लिबुजा समन्तं परिषस्वजे ।
एवा परि ष्वजस्व मां यथा मां कामिन्यसो यथा मन्नापगा असः ॥१॥
यथा सुपर्णः प्रपतन्पक्षौ निहन्ति भूम्याम् ।
एवा नि हन्मि ते मनो यथा मां कामिन्यसो यथा मन्नापगा असः ॥२॥
यथेमे द्यावापृथिवी सद्यः पर्येति सूर्यः ।
एवा पर्येमि ते मनो यथा मां कामिन्यसो यथा मन्नापगा असः ॥३॥

यथा । वृक्षम् । लिबुजा । समन्तम् । परिऽसस्वजे । एव । परि । स्वजस्व । माम् । यथा
माम् । कामिनी । असः । यथा । मत् । न । अपऽगाः । असः ॥ १ ॥
यथा । सुऽपर्णः । प्रऽपतन् । पक्षौ । निऽहन्ति । भूम्याम् ।
एव । नि । हन्मि । ते । मनः । यथा । माम् । कामिनी । असः । यथा ।
मत् । न । अपऽगाः । असः ॥२॥
एव । परि । एमि । ते । मनः । यथा । माम् । कामिनी । असः ।
यथा । मत् । न । अपऽगाः । असः ॥ ३ ॥



**VI.7.2** O blissful Lord, O overpowering one, by what force you put the life-giving powers (asuras) under our control, thereby may you incite us.

### Viśvedevāḥ

**VI.7.3** O bounties of Nature, whereby you keep captive the vigours of the life-giving powers, thereby may you give us comfort.

### Kāma (Love) - Ātman

**VI.8.1** As a creeper embraces a tree on all its sides, so do embrace me, so that you may be desirous of me, so that you may never be deserting (going away from) me.

**VI.8.2** As an eagle, when taking off, strikes his wings down on the earth, so I strike your mind, so that you may be desirous of me, so that you may never be deserting (going away from) me.

**VI.8.3** As the sun reaches these two, heaven and earth, at once, so I reach your mind, so that you may be desirous of me, so that you may never be deserting (going away from) me.

(९) नवमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य जमदग्निर्ऋषिः । कामात्मा देवता । अनुष्टुप् छन्दः ॥

वाञ्छ मे तन्वं पादौ वाञ्छाक्ष्यौ वाञ्छ सक्थ्यौ ।
अक्ष्यौ वृषण्यन्त्याः केशा मां ते कामेन शुष्यन्तु ॥१॥
मम त्वा दोषणिश्रिषं कृणोमि हृदयश्रिषम् ।
यथा मम क्रतावसो मम चित्तमुपायसि ॥२॥
यासां नाभिरारेहणं हृदि संवननं कृतम् ।
गावो घृतस्य मातरोऽमूं सं वानयन्तु मे ॥३॥

वाञ्छ । मे । तन्वम् । पादौ । वाञ्छ । अक्ष्यौ । वाञ्छ । सक्थ्यौ ।
अक्ष्यौ । वृषण्यन्त्याः । केशाः । माम् । ते । कामेन । शुष्यन्तु ॥ १ ॥
मम । त्वा । दोषणिऽश्रिषम् । कृणोमि । हृदयऽश्रिषम् ।
यथा । मम । क्रतौ । असः । मम । चित्तम् । उपऽआयसि ॥ २ ॥
यासाम् । नाभिः । आऽरेहणम् । हृदि । सम्ऽवननम् । कृतम् ।
गावः । घृतस्य । मातरः अमूम् । सम् । वनयन्तु । मे ॥ ३ ॥

(१०) दशमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य शन्तातिर्ऋषिः । (१) प्रथमर्चोऽग्निः, (२) द्वितीयाया वायुः, (३) तृतीयायाश्च सूर्यो देवताः । (१) प्रथमायाः साम्नी त्रिष्टुप्, (२) द्वितीयायाः प्राजापत्या बृहती, (३) तृतीयायाश्च साम्नी बृहती छन्दांसि । सर्वा द्विपदाः ॥

पृथिव्यै श्रोत्राय वनस्पतिभ्योऽग्नयेऽधिपतये स्वाहा ॥१॥
प्राणायान्तरिक्षाय वयोभ्यो वायवेऽधिपतये स्वाहा ॥२॥
दिवे चक्षुषे नक्षत्रेभ्यः सूर्यायाधिपतये स्वाहा ॥३॥

पृथिव्यै । श्रोत्राय । वनस्पतिऽभ्यः । अग्नये । अधिऽपतये । स्वाहा ॥ १ ॥
प्राणाय । अन्तरिक्षाय । वयःऽभ्यः । वायवे । अधिऽपतये । स्वाहा ॥ २ ॥
दिवे । चक्षुषे । नक्षत्रेभ्यः । सूर्याय । अधिऽपतये । स्वाहा ॥ ३ ॥



## Kāma (Love) - Ātman

**VI.9.1** May you long for my body, for my feet; may you long for my eyes and my thighs. Let eyes and hair of yours, passionately desirous of me, parch me (śuṣyantu) with an intense desire for you.

**VI.9.2** I make you cling to my arms, make you cling to my heart, so that you will be one in desire with me and will be one in thought with me (shall be pleasing to my heart).

**VI.9.3** Kissing is whose relationship (nābhiḥ), and conciliation is in heart, may the cows, mothers of butter, make that maiden inclined towards me. ( They whose navel is a licking - yasyām nābhiḥ ārehaṇam)

## Agni

**VI.10.1** For hearing (śrotrāya) to the earth, to the vegetation, and to the fire, their overlord, I dedicate.

## Vāyu

**VI.10.2** For breath, to the midspace, to the birds, and to the wind, their overlord, I dedicate.

## Āditya

**VI.10.3** For vision to the sky, to the stars and to the sun, their overlord, I dedicate.

(११) एकादशं सूक्तम्

(१-३) सूक्तस्यास्य प्रजापतिर्ऋषिः । रेतो मन्त्रोक्ता वा देवता । अनुष्टुप् छन्दः ।

शमीमश्वत्थ आरूढस्तत्र पुंसुवनं कृतम् । तद्वै पुत्रस्य वेदनं तत्स्त्रीष्वा भरामसि ॥१॥
पुंसि वै रेतो भवति तत्स्त्रियामनु षिच्यते । तद्वै पुत्रस्य वेदनं तत्प्रजापतिरब्रवीत् ॥२॥
प्रजापतिरनुमतिः सिनीवाल्यचीक्लृपत् । स्त्रैषूयमन्यत्र दधत्पुमांसमु दधदिह ॥३॥

शमीम् । अश्वत्थः । आऽरूढः । तत्र । पुम्ऽसुवनम् । कृतम् ।
तत् । वै । पुत्रस्य । वेदनम् । तत् । स्त्रीषु । आ । भरामसि ॥ १ ॥

पुंसि । वै । रेतः । भवति । तत् । स्त्रियाम् । अनु । सिच्यते ।
तत् । वै । पुत्रस्य । वेदनम् । तत् । प्रजाऽपतिः । अब्रवीत् ॥ २ ॥

प्रजाऽपतिः । अनुऽमतिः । सिनीवाली । अचीक्लृपत् ।
स्त्रैसूयम् । अन्यत्र । दधत् । पुमांसम् । ऊं इति । दधत् । इह ॥ ३ ॥

(१२) द्वादशं सूक्तम्

(१-३) सूक्तस्यास्य गरुत्मान् ऋषिः । तक्षको देवता । अनुष्टुप् छन्दः ।

परि द्यामिव सूर्योऽहीनां जनिमागमम् ।
रात्री जगदिवान्यद्धंसात्तेना ते वारये विषम् ॥१॥
यद्ब्रह्मभिर्यदृषिभिर्यद्देवैर्विदितं पुरा ।
यद्भूतं भव्यमासन्वत्तेना ते वारये विषम् ॥२॥
मध्वा पृञ्चे नद्यः पर्वता गिरयो मधु ।
मधु परुष्णी शीपाला शमास्ने अस्तु शं हृदे ॥३॥

परि । द्याम्ऽइव । सूर्यः । अहीनाम् । जनिम । अगमम् ।
रात्री । जगत्ऽइव । अन्यत् । हंसात् । तेन । ते । वारये । विषम् ॥ १ ॥

यत् । ब्रह्मऽभिः । यत् । ऋषिऽभिः । यत् । देवैः । विदितम् । पुरा ।
यत् । भूतम् । भव्यम् । आसन्ऽवत् । तेन । ते । वारये । विषम् ॥ २ ॥

मध्वा । पृञ्चे । नद्यः । पर्वताः । गिरयः । मधु ।
मधु । परुष्णी । शीपाला । शम् । आस्ने । अस्तु । शम् । हृदे ॥ ३ ॥



## Retas

**VI.11.1** Aśvattha (holy fig tree) mounted on a śamī (Mimosa suma). There a male birth is assured. That is certainly the obtainment of a son. That we administer to women.

**VI.11.2** In the male, of course, the semen is formed. That, afterwards, is discharged into the female. That surely is the begetter of a son, so the Lord of offsprings (Prajāpati) has proclaimed.

## As given in the Verse

**VI.11.3** The Lord of creatures, mutual consent, (anumati) and active life (sinīvālī) give shape (to the embryo). May they put a male here and the birth of girl elsewhere.

## Cure for Poison

**VI.12.1** As the sun reaches the sky and as the night reaches all the world other than the sun, so I reach the race of snakes. With that (knowledge), I ward off your poison.

**VI.12.2** Which was discovered by the learned, by the seers and by the enlightened ones in the days of old; which is of the past and will be in future also, with that (knowledge), O you having a mouth, I ward off your poison.

**VI.12.3** I fill it with honey. Rivers, mountains and hills are sweet. Sweet are the paruṣṇī and the śīpālā. May it be soothing to mouth and soothing to heart. (Rivers (nadyaḥ) as Gangā or Paruṣṇi; mountains as Himālaya; śipālā as śaivāla, a water grass; giri as the foot-hills of the mountains). (Cf. The nadyaḥ hymn of the Ṛgveda X.75.5)

( १३ ) त्रयोदशं सूक्तम्

(१-३) इत्यस्य सूक्तस्याथर्वा ऋषिः । मृत्युर्देवता । अनुष्टुप् छन्दः ॥

नमो देववधेभ्यो नमो राजवधेभ्यः ।
अथो ये विश्यानां वधास्तेभ्यो मृत्यो नमोस्तु ते ॥१॥
नमस्ते अधिवाकाय परावाकाय ते नमः ।
सुमत्यै मृत्यो ते नमो दुर्मत्यै त इदं नमः ॥२॥
नमस्ते यातुधानेभ्यो नमस्ते भेषजेभ्यः ।
नमस्ते मृत्यो मूलेभ्यो ब्राह्मणेभ्य इदं नमः ॥३॥

नमः । देवऽवधेभ्यः । नमः । राजऽवधेभ्यः ।
अथो इति । ये । विश्यानाम् । वधाः । तेभ्यः । मृत्यो इति । नमः । अस्तु । ते ॥ १ ॥
नमः । ते । अधिऽवाकाय । पराऽवाकाय । ते । नमः ।
सुऽमत्यै । मृत्यो इति । ते । नमः । दुःऽमत्यै । ते । इदम् । नमः ॥ २॥
नमः । ते । यातुऽधानेभ्यः । नमः । ते । भेषजेभ्यः ।
नमः । ते । मृत्यो इति । मूलेभ्यः । ब्राह्मणेभ्यः । इदम् । नमः ॥ ३ ॥

( १४ ) चतुर्दशं सूक्तम्

(१-३) इत्यस्य सूक्तस्य बभ्रुपिङ्गल ऋषिः । बलासो देवता । अनुष्टुप् छन्दः ॥

अस्थिस्रंसं परुस्रंसमास्थितं हृदयामयम् । बलासं सर्वं नाशयाङ्गेष्ठा यश्च पर्वसु ॥१॥
निर्बलासं बलासिनः क्षिणोमि मुष्करं यथा । छिनद्म्यस्य बन्धनं मूलमुर्वार्वा इव ॥२॥
निर्बलासेतः प्र पताशुंगः शिशुको यथा । अथो इट इव हायनोप द्राह्यवीरहा ॥३॥

अस्थिऽस्रंसम् । परुःऽस्रंसम् । आऽस्थितम् । हृदयऽआमयम् ।
बलासम् । सर्वम् । नाशय । अङ्गेऽस्थाः । यः । च । पर्वऽसु ॥ १ ॥
निः । बलासम् । बलासिनः । क्षिणोमि । मुष्करम् । यथा ।
छिनद्मि । अस्य । बन्धनम् । मूलम् । उर्वार्वाःऽइव ॥ २ ॥
निः । बलास । इतः । प्र । पत । आशुंगः । शिशुकः । यथा ।
अथो इति । इटःऽइव । हायनः । अप । द्राहि । अवीरऽहा ॥ ३ ॥



## Mṛtyu : Death

**VI.13.1** Our homage be to the weapons of the bounties of Nature; our homage be to the weapon of the rulers; then to the weapons, that belong to common people, and to you, O death, let our homage be. ( deva-vadhebhyaḥ, rājā-vadhebhyaḥ and viśyānām vadhebhyaḥ refer to the weapons of the three varṇas.)

**VI.13.2** Our homage be to your blessings and to your curses; let our homage be. O death, homage be to your good-will and to your ill-will, let this our homage be. (adhivāka = blessing; parāvāka = curse; sumatyai = good will; durmatyai = ill-will)

**VI.13.3** Our homage be to your tormenting diseases and to your remedies; let our homage be. Our homage be, O death, to your root causes and to the men of knowledge; let this our homage be. ( yātudhāna = tormenting disease; bheṣaja = remedy or medicine]

## Bone - Weakening : Balāsaḥ

**VI.14.1** May you remove the bone-weakening and the joint-weakening malady, the firmly seated heart-trouble and all the wasting disease, that lies in limbs and in joints.

**VI.14.2** I destroy the consumption of the consumptive patient, as if it were a thief (Muṣkara = thief). I cut off its root like the stalk of a melon or gourd (urvaru).

**VI.14.3** O wasting disease (balāsa), run away fast from here, like a fast galloping foal (āśuṅga). Then like grass, growing annually, disappear hence without harming our men or children (śiśukaḥ).

(१५) पञ्चदशं सूक्तम्

(१-३) [illegible] सूक्तस्योद्दालक ऋषिः । वनस्पतिर्देवता । अनुष्टुप् छन्दः ॥

उत्तमो अस्योषधीनां तव वृक्षा उपस्तयः ।
उपस्तिरस्तु सो३स्माकं यो अस्माँ अभिदासति ॥१॥
सबन्धुश्चासबन्धुश्च यो अस्माँ अभिदासति ।
तेषां सा वृक्षाणामिवाहं भूयासमुत्तमः ॥२॥
यथा सोम ओषधीनामुत्तमो हविषां कृतः ।
तलाशा वृक्षाणामिवाहं भूयासमुत्तमः ॥३॥

उत्ऽतमः । असि । ओषधीनाम् । तव । वृक्षाः । उपऽस्तयः ।
उपऽस्तिः । अस्तु । सः । अस्माकम् । यः । अस्मान् । अभिऽदासति ॥ १ ॥
सऽबन्धुः । च । असबन्धुः । च । यः । अस्मान् । अभिऽदासति ।
तेषाम् । सा । वृक्षाणाम्ऽइव । अहम् । भूयासम् । उत्ऽतमः ॥ २ ॥
यथा । सोमः । ओषधीनाम् । उत्ऽतमः । हविषाम् । कृतः ।
तलाशा । वृक्षाणाम्ऽइव । अहम् । भूयासम् । उत्ऽतमः ॥ ३ ॥

(१६) षोडशं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्य शौनक ऋषिः । चन्द्रमा वा देवता । (१) प्रथमर्चो निचृत्त्रिपदा गायत्री, (२) द्वितीयाया अनुष्टुप्, (३) तृतीयाया बृहतीगर्भा ककुम्मत्यनुष्टुप्, (४) चतुर्थ्याश्च त्रिपदा प्रतिष्ठा गायत्री छन्दांसि ॥

आबयो अनाबयो रसस्त उग्र आबयो । आ ते करम्भमद्मसि ॥१॥
विहल्हो नाम ते पिता मदावती नाम ते माता ।
स हिन त्वमसि यस्त्वमात्मानमावयः ॥२॥

आबयो इति । अनाबयो इति । रसः । ते । उग्रः । आबयो इति ।
आ । ते । करम्भम् । अद्मसि ॥ १ ॥
विऽहह्लः । नाम । ते । पिता । मदऽवती । नाम । ते । माता ।
सः । हिन । त्वम् । असि । यः । त्वम् । आत्मानम् । आवयः ॥ २ ॥



## Vanaspati (herb)

**VI.15.1** You are noblest of the herbs. All the trees are subordinate to you. May he be subordinate to us, whosoever wants to enslave us.

**VI.15.2** Whosoever, whether with kinsmen or without kinsmen, want to enslave us, among them, may I become uppermost, just as that herb is among the trees.

**VI.15.3** Just as soma is made best among herbal oblations and talāśa among trees, so may I become upper-most.

## As in the Verses

**VI.16.1** O ābayu (fit for eating), O anābayu (unfit for eating), your sap is strong. O ābayu, we eat your broth with relish.

**VI.16.2** Vihalha is your father's name; your mother's name is Madāvatī. Surely it is he, and not you, who have let yourself to be consumed.

तौविलिकेऽवेलयावायमैलब ऐलयीत् । बभ्रुश्च बभ्रुकर्णश्चापेहि निराल ॥३॥
अलसालासि पूर्वा सिलाञ्जालास्युत्तरा । नीलागलसाला ॥४॥

तौविलिके । अव । इलय । अव । अयम् । ऐलबः । ऐलयीत् ।
बभ्रुः । च । बभ्रुऽकर्णः । च । अप । इहि । निः । आल ॥ ३ ॥

अलसाला । असि । पूर्वा । सिलाञ्जाला । असि । उत्तरा । नीलागलसाला ॥ ४ ॥

( १७ ) सप्तदशं सूक्तम्
(१–४) चतुर्ऋचस्यास्य सूक्तस्याथर्वा ऋषिः । गर्भदृंहणं देवता । अनुष्टुप् छन्दः ॥

यथेयं पृथिवी मही भूतानां गर्भमादधे ।
एवा ते ध्रियतां गर्भो अनु सूतुं सवितवे ॥१॥
यथेयं पृथिवी मही दाधारेमान्वनस्पतीन् ।
एवा ते ध्रियतां गर्भो अनु सूतुं सवितवे ॥२॥
यथेयं पृथिवी मही दाधार पर्वतान्गिरीन् ।
एवा ते ध्रियतां गर्भो अनु सूतुं सवितवे ॥३॥
यथेयं पृथिवी मही दाधार विष्ठितं जगत् ।
एवा ते ध्रियतां गर्भो अनु सूतुं सवितवे ॥४॥

यथा । इयम् । पृथिवी । मही । भूतानाम् । गर्भम् । आऽदधे ।
एव । ते । ध्रियताम् । गर्भः । अनु । सूतुम् । सवितवे ॥ १ ॥
यथा । इयम् । पृथिवी । मही । दाधार । इमान् । वनस्पतीन् । एव ।०॥२॥
यथा । इयम् । पृथिवी । मही । दाधार । पर्वतान् । गिरीन् । एव ।०॥३॥
यथा । इयम् । पृथिवी । मही । दाधार । विऽस्थितम् । जगत् । एव ।० ॥ ४ ॥



**VI.16.3** O tauvilika, may you calm down (avelaya). This painful eye-disease, a racket (ailabah) has subsided. O powerful brown one and the brown-eared one, get out of here. O nirāla.

**VI.16.4** Formerly you are alasālā; later you are silāñjālā, and then nīlāgalasālā.

## Development of Garbha (Embryo)

**VI.17.1** As this vast earth receives the germ of would-be beings, so may your embryo form and develop for birth under favourable conditions.

**VI.17.2** As this vast earth bears these mighty trees, so may your embryo form and develop for birth under favourable conditions.

**VI.17.3** As this vast earth bears the hills and the mountains, so may your embryo form and develop for birth under favourable conditions.

**VI.17.4** As this vast earth bears the multifarious (viṣṭhitam) living beings, so may your embryo form and develop for birth under favourable conditions.

( १८ ) अष्टादशं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्याथर्वा ऋषिः । ईर्ष्याविनाशनं देवता । अनुष्टुप् छन्दः ।

ईर्ष्याया ध्राजिं प्रथमां प्रथमस्या उतापराम् ।
अग्निं हृदय्यं१ शोकं तं ते निर्वापयामसि ॥१॥
यथा भूमिर्मृतमना मृतान्मृतमनस्तरा ।
यथोत मम्रुषो मन एवेर्ष्योर्मृतं मनः ॥२॥
अदो यत्ते हृदि श्रितं मनस्कं पतयिष्णुकम् ।
ततस्त ईर्ष्यां मुञ्चामि निरूष्माणं दृतेरिव ॥३॥

ईर्ष्यायाः । ध्राजिम् । प्रथमाम् । प्रथमस्याः । उत । अपराम् ।
अग्निम् । हृदय्यम् । शोकम् । तम् । ते । निः । वापयामसि ॥ १ ॥
यथा । भूमिः । मृतऽमनाः । मृतात् । मृतमनःऽतरा ।
यथा । उत । मम्रुषः । मनः । एव । ईर्ष्योः । मृतम् । मनः ॥ २ ॥
अदः । यत् । ते । हृदि । श्रितम् । मनःऽकम् । पतयिष्णुकम् ।
ततः । ते । ईर्ष्याम् । मुञ्चामि । निः । ऊष्माणम् । दृतेःऽइव ॥ ३ ॥

( १९ ) एकोनविंशं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य शन्तातिर्ऋषिः । चन्द्रमा मन्त्रोक्ता वा देवताः ।
(१) प्रथमर्चोऽनुष्टुप्, (२-३) द्वितीयातृतीययोश्च गायत्री छन्दसी ।

पुनन्तु मा देवजनाः पुनन्तु मनवो धिया ।
पुनन्तु विश्वा भूतानि पवमानः पुनातु मा ॥१॥
पवमानः पुनातु मा क्रत्वे दक्षाय जीवसे । अथो अरिष्टतातये ॥२॥
उभाभ्यां देव सवितः पवित्रेण सवेन च । अस्मान्पुनीहि चक्षसे ॥३॥

पुनन्तु । मा । देवऽजनाः । पुनन्तु । मनवः । धिया ।
पुनन्तु । विश्वा । भूतानि । पवमानः । पुनातु । मा ॥ १ ॥
पवमानः । पुनातु । मा । क्रत्वे । दक्षाय । जीवसे ।
अथो इति । अरिष्टऽतातये ॥ २ ॥
उभाभ्याम् । देव । सवितः । पवित्रेण । सवेन । च ।
अस्मान् । पुनीहि । चक्षसे ॥ ३ ॥



## Jealousy: its removal

**VI.18.1** The first impulse of jealousy, and the other following the first one, the fire and sorrow of your heart - that we extinguish.

**VI.18.2** As the earth is lifeless-minded, more lifeless-minded even than the dead; as is the mind of a dying person, so lifeless is the mind of the jealous.

**VI.18.3** Out of that fluttering mind which harbours your heart, I relinquish your jealousy like heat out of a bellow.

## As given in the Verses

**VI.19.1** May the enlightened persons purify me, may the meditating men purify me. May all the beings purify me; may the purifier Lord purify me.

**VI.19.2** May the purifier Lord purify me for good actions, dexterity and long life as well as for augmenting well-being.

**VI.19.3** O impeller Lord, with both the cleansing and straining, may you purify us, so that we may see.

(२०) विंशं सूक्तम्

(१-३) त्र्यृचस्यास्य सूक्तस्य भृग्वङ्गिरा ऋषिः । यक्ष्मनाशनं मन्त्रोक्ताश्च देवताः । (१) प्रथमर्चोऽतिजगती, (२) द्वितीयायाः ककुम्मती प्रस्तारपङ्क्तिः, (३) तृतीयायाश्च सतः पङ्क्तिश्छन्दांसि ।

अग्नेरिवास्य दहत एति शुष्मिण उतेव मत्तो विलपन्नपायति ।
अन्यमस्मदिच्छतु कं चिदव्रतस्तपुर्वधाय नमो अस्तु तक्मने ॥१॥
नमो रुद्राय नमो अस्तु तक्मने नमो राज्ञे वरुणाय त्विषीमते ।
नमो दिवे नमः पृथिव्यै नम ओषधीभ्यः ॥२॥
अयं यो अभिशोचयिष्णुर्विश्वा रूपाणि हरिता कृणोषि ।
तस्मै तेऽरुणाय बभ्रवे नमः कृणोमि वन्याय तक्मने ॥३॥

अग्नेःऽइव । अस्य । दहतः । एति । शुष्मिणः । उतऽइव । मत्तः । विऽलपन् । अप । अयति ।
अन्यम् । अस्मत् । इच्छतु । कम् । चित् । अव्रतः । तपुःऽवधाय । नमः । अस्तु । तक्मने ॥ १ ॥
नमः । रुद्राय । नमः । अस्तु । तक्मने । नमः । राज्ञे । वरुणाय । त्विषिऽमते ।
नमः । दिवे । नमः । पृथिव्यै । नमः । ओषधीभ्यः ॥ २ ॥
अयम् । यः । अभिऽशोचयिष्णुः । विश्वा । रूपाणि । हरिता । कृणोषि ।
तस्मै । ते । अरुणाय । बभ्रवे । नमः । कृणोमि । वन्याय । तक्मने ॥ ३ ॥

(२१) एकविंशं सूक्तम्

(१-३) त्र्यृचस्यास्य सूक्तस्य शन्तातिर्ऋषिः । चन्द्रमा देवता । अनुष्टुप् छन्दः ।

इमा यास्तिस्रः पृथिवीस्तासां ह भूमिरुत्तमा ।
तासामधि त्वचो अहं भेषजं समु जग्रभम् ॥१॥
श्रेष्ठमसि भेषजानां वसिष्ठं वीरुधानाम् ।
सोमो भग इव यामेषु देवेषु वरुणो यथा ॥२॥
रेवतीरनाधृषः सिषासवः सिषासथ ।
उत स्थ केशदृंहणीरथो ह केशवर्धनीः ॥३॥

इमाः । याः । तिस्रः । पृथिवीः । तासाम् । ह । भूमिः । उत्ऽतमा ।
तासाम् । अधि । त्वचः । अहम् । भेषजम् । सम् । ऊं इति । जग्रभम् ॥ १ ॥
श्रेष्ठम् । असि । भेषजानाम् । वसिष्ठम् । वीरुधानाम् ।
सोमः । भगःऽइव । यामेषु । देवेषु । वरुणः । यथा ॥ २ ॥
रेवतीः । अनाधृषः । सिसासवः । सिसासथ ।
उत । स्थ । केशऽदृंहणीः । अथो इति । ह । केशऽवर्धनीः ॥ ३ ॥



## Cure of Yakṣma

**VI.20.1** Like the heat of this mighty burning fire, (the fever) comes; and then like a mad person, crying out it goes away. May this unruly one, seek some one other than us for killing with intense heat. Our homage be to the fever.

**VI.20.2** Our homage be to the terrible punisher; to the fever let our homage be; homage be to the brilliant sovereign venerable Lord. Homage to heaven, homage to earth, homage to medicinal herbs.

**VI.20.3** You, who burning vehemently, make all the faces pale, to you, red and brown, the forest-fever, I bow in reverence. (Vanyay-takmane=forest fever)

## Candramāh : Moons

**VI.21.1** Out of these three wide-spreading realms that exist, the earth is certainly the best. From the skin of those (realms), I have picked up the remedy.

**VI.21.2** You are the best among medicines, most desirable among plants; as the moon is Lord among the stars (Yama) and the ocean among the bounties of nature.

**VI.21.3** O (remedies) richly endowed, never-failing, willing to cure, may you wish to cure (us). Surely you are strengtheners of hair as well as increaser of hair-growth.

(२२) द्वाविंशं सूक्तम्

(१-३) एतस्यास्य सूक्तस्य शन्तातिर्ऋषिः । आदित्यरश्मिर्मरुतो वा देवताः । (१, ३) प्रथमातृतीययोर्ऋचोस्त्रिष्टुप्, (२) द्वितीयायाश्च चतुष्पदा भुरिग्जगती छन्दसी ॥

कृष्णं नियानं हरयः सुपर्णा अपो वसाना दिवमुत्पतन्ति ।
त आववृत्रन्त्सदनादृतस्यादिद्घृतेन पृथिवीं व्यूदुः ॥१॥
पयस्वतीः कृणुथाप ओषधीः शिवा यदेजथा मरुतो रुक्मवक्षसः ।
ऊर्जं च तत्र सुमतिं च पिन्वत यत्रा नरो मरुतः सिञ्चथा मधु ॥२॥
उदप्रुतो मरुतस्ताँ इयर्त वृष्टिर्या विश्वा निवतस्पृणाति ।
एजाति ग्लहा कन्येव तुन्नैरुं तुन्दाना पत्येव जाया ॥३॥

कृष्णम् । निऽयानम् । हरयः । सुऽपर्णाः । अपः । वसानाः । दिवम् । उत् । पतन्ति ।
ते । आ । अववृत्रन् । सदनात् । ऋतस्य । आत् । इत् । घृतेन । पृथिवीम् । वि । ऊदुः ।
पयस्वतीः । कृणुथ । अपः । ओषधीः । शिवाः । यत् । एजथ । मरुतः । रुक्मऽवक्षसः ।
ऊर्जम् । च । तत्र । सुऽमतिम् । च । पिन्वत । यत्र । नरः । मरुतः । सिञ्चथ । मधु ॥
उदऽप्रुतः । मरुतः । तान् । इयर्त । वृष्टिः । या । विश्वाः । निऽवतः । पृणाति ।
एजाति । ग्लहा । कन्याऽइव । तुन्ना । एरुम् । तुन्दाना । पत्याऽइव । जाया ॥३॥

(२३) त्रयोविंशं सूक्तम्

(१-३) एतस्यास्य सूक्तस्य शन्तातिर्ऋषिः । आपो देवताः । (१) प्रथमर्चोऽनुष्टुप्, (२) द्वितीयायास्त्रिपदा गायत्री, (३) तृतीयायाश्च परोष्णिक् छन्दांसि ॥

सस्रुषीस्तदपसो दिवा नक्तं च सस्रुषीः । वरेण्यक्रतुरहमपो देवीरुप ह्वये ॥१॥
ओता आपः कर्मण्या मुञ्चन्त्वितः प्रणीतये । सद्यः कृण्वन्त्वेतवे ॥२॥
देवस्य सवितुः सवे कर्म कृण्वन्तु मानुषाः । शं नो भवन्त्वप ओषधीः शिवाः ॥३॥

सस्रुषीः । तत् । अपसः । दिवा । नक्तम् । च । सस्रुषीः ।
वरेण्यऽक्रतुः । अहम् । अपः । देवीः । उप । ह्वये ॥ १ ॥
आऽउताः । आपः । कर्मण्याः । मुञ्चन्तु । इतः । प्रऽनीतये । सद्यः । कृण्वन्तु । एतवे ॥
देवस्य । सवितुः । सवे । कर्म । कृण्वन्तु । मानुषाः ।
शम् । नः । भवन्तु । अपः । ओषधीः । शिवाः ॥ ३ ॥



hair as well as increaser of hair-growth.

## Rays of the Āditya - the Sun

**VI.22.1** The smooth-gliding waters (of the rain, the solar rays) clothing the waters with a dark cloud, ascend to heaven. They come down again from the dwelling of the rain, and immediately moisten the earth with water. (Also Ṛg. I.164.4 with variation)

## Marut

**VI.22.2** O golden-breasted cloud-bearing winds, when you move, you make the waters and the plants rich with sap and render them beneficial. O manly heroes, may you pour vigour and wisdom wherever you shower sweetness.

**VI.22.3** O cloud-bearing winds, may you send the water-laiden clouds, the rain, that will fill all the flowing streams. Let the thunder rush about, like a maiden heart, to the cloud like a wife being beaten by a husband. (tundana patyeva Jāyā)

## Āpaḥ - Waters

**VI.23.1** Those flowing streams, and the divine waters flowing day and night in streams, I, of excellent actions, hereby call to me.

**VI.23.2** May the waters, seeping through and fit for treatment, release me from this (miserable state) for recoupment. May they quickly make me able to move about.

**VI.23.3** Let men perform their action at the impulsion of the impeller Lord. May the gracious waters become for us remedies

(२४) चतुर्विंशं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य शन्तातिर्ऋषिः । आपो देवताः । अनुष्टुप् छन्दः ॥

हिमवतः प्र स्रवन्ति सिन्धौ समह संगमः ।
आपो ह मह्यं तद्देवीर्ददन्हृद्द्योतभेषजम् ॥१॥
यन्मे अक्ष्योरादिद्योत पार्ष्ण्योः प्रपदोश्च यत् ।
आपस्तत्सर्वं निष्करन्भिषजां सुभिषक्तमाः ॥२॥
सिन्धुपत्नीः सिन्धुराज्ञीः सर्वा या नद्य१ स्थन ।
दत्त नस्तस्य भेषजं तेना वो भुनजामहै ॥३॥

हिमऽवतः । प्र । स्रवन्ति । सिन्धौ । समह । सम्ऽगमः ।
आपः । ह । मह्यम् । तत् । देवीः । ददन् । हृद्द्योतऽभेषजम् ॥ १ ॥
यत् । मे । अक्ष्योः । आऽदिद्योत । पार्ष्ण्योः । प्रऽपदोः । च । यत् ।
आपः । तत् । सर्वम् । निः । करन् । भिषजाम् । सुभिषक्ऽतमाः ॥ २ ॥
सिन्धुऽपत्नीः । सिन्धुऽराज्ञीः । सर्वाः । याः । नद्यः । स्थन ।
दत्त । नः । तस्य । भेषजम् । तेन । वः । भुनजामहै ॥ ३ ॥

(२५) पञ्चविंशं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य शुनःशेप ऋषिः । मन्याविनाशनं देवता । अनुष्टुप् छन्दः ॥

पञ्च च याः पञ्चाशच्च संयन्ति मन्या अभि ।
इतस्ताः सर्वा नश्यन्तु वाका अपचितामिव ॥१॥
सप्त च याः सप्ततिश्च संयन्ति ग्रैव्या अभि ।
इतस्ताः सर्वा नश्यन्तु वाका अपचितामिव ॥२॥
नव च या नवतिश्च संयन्ति स्कन्ध्या अभि ।
इतस्ताः सर्वा नश्यन्तु वाका अपचितामिव ॥३॥

पञ्च । च । याः । पञ्चाशत् । च । सम्ऽयन्ति । मन्याः । अभि ।
इतः । ताः । सर्वाः । नश्यन्तु । वाकाः । अपचिताम्ऽइव ॥ १ ॥
सप्त । च । याः । सप्ततिः । च । सम्ऽयन्ति । ग्रैव्याः । अभि ।
इतः । ताः । सर्वाः । नश्यन्तु । वाकाः । अपचिताम्ऽइव ॥ २ ॥
नव । च । याः । नवतिः । च । सम्ऽयन्ति । स्कन्ध्याः । अभि ।
इतः । ताः । सर्वाः । नश्यन्तु । वाकाः । अपचिताम्ऽइव ॥ ३ ॥



giving relief.

### Āpah - Waters

**VI.24.1** They stream out from the snowy mountain, and meet the ocean some where. May those divine waters give me the remedy for burnings in heart.

**VI.24.2** Whatever burning was there in my eyes and in soles of my feet, the waters, the best healer among healers, have removed all that.

**VI.24.3** O rivers, all of you are wives and queens of ocean. May you give us a remedy for this disease, so that we may enjoy you.

### Cure for Manyā : Region of Napes

**VI.25.1** The five and the fifty (pains), that go towards region of nape (back of neck), may all of them vanish from here like noises of noxious flying insects (apacitam). (5-->50) (manya-abhi-towards nape)

**VI.25.2** The seven and the seventy (pains), that go towards the region of neck, may all of them vanish from here like noises of noxious flying insects. (7-->70) (graivya abhi-towards neck)

**VI.25.3** The nine and the ninety (pains), that go towards the region of neck, may all of them vanish from here like noises of

(२६) षड्विंशं सूक्तम्

(१–३) तृचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । पाप्मा देवता । अनुष्टुप् छन्दः ॥

अव मा पाप्मन्त्सृज वशी सन्मृडयासि नः ।
आ मा भद्रस्य लोके पाप्मन्धेह्यविहुतम् ॥१॥
यो नः पाप्मन्न जहासि तमु त्वा जहिमो वयम् ।
पथामनु व्यावर्तनेऽन्यं पाप्मानु पद्यताम् ॥२॥
अन्यत्रास्मन्न्युच्यतु सहस्राक्षो अमर्त्यः ।
यं द्वेषाम तमृच्छतु यमु द्विष्मस्तमिज्जहि ॥३॥

अव । मा । पाप्मन् । सृज । वशी । सन् । मृडयासि । नः ।
आ । मा । भद्रस्य । लोके । पाप्मन् । धेहि । अविऽहुतम् ॥ १ ॥
यः । नः । पाप्मन् । न । जहासि । तम् । ऊं इति । त्वा । जहिमः । वयम् ।
पथाम् । अनु । विऽआवर्तने । अन्यम् । पाप्मा । अनु । पद्यताम् ॥ २ ॥
अन्यत्र । अस्मत् । नि । उच्यतु । सहस्रऽअक्षः । अमर्त्यः ।
यम् । द्वेषाम । तम् । ऋच्छतु । यम् । ऊं इति । द्विष्मः । तम् । इत् । जहि ॥ ३ ॥

(२७) सप्तविंशं सूक्तम्

(१–३) तृचस्यास्य सूक्तस्य भृगुर्ऋषिः । यमो निर्ऋतिर्वा देवता । (१, ३) प्रथमा-तृतीययोर्ऋचोर्जगती, (२) द्वितीयायाश्च त्रिष्टुप् छन्दसी ॥

देवाः कपोत इषितो यदिच्छन्दूतो निर्ऋत्या इदमाजगाम ।
तस्मा अर्चाम कृणवाम निष्कृतिं शं नो अस्तु द्विपदे शं चतुष्पदे ॥१॥
शिवः कपोत इषितो नो अस्त्वनागा देवाः शकुनो गृहं नः ।
अग्निर्हि विप्रो जुषतां हविर्नः परि हेतिः पक्षिणी नो वृणक्तु ॥२॥
हेतिः पक्षिणी न दभात्यस्मानाष्ट्री पदं कृणुते अग्निधाने ।
शिवो गोभ्य उत पुरुषेभ्यो नो अस्तु मा नो देवा इह हिंसीत्कपोतः ॥३॥

देवाः । कपोतः । इषितः । यत् । इच्छन् । दूतः । निःऽऋत्याः । इदम् । आऽजगाम ।
तस्मै । अर्चाम । कृणवाम । निःऽकृतिम् । शम् । नः । अस्तु । द्विऽपदे । शम् । चतुःऽपदे ॥ १ ॥
शिवः । कपोतः । इषितः । नः । अस्तु । अनागाः । देवाः । शकुनः । गृहम् । नः ।
अग्निः । हि । विप्रः । जुषताम् । हविः । नः । परि । हेतिः । पक्षिणी । नः । वृणक्तु ॥ २ ॥
हेतिः । पक्षिणी । न । दभाति । अस्मान् । आष्ट्री इति । पदम् । कृणुते । अग्निऽधाने ।
शिवः । गोभ्यः । उत । पुरुषेभ्यः । नः । अस्तु । मा । नः । देवाः । इह । हिंसीत् । कपोतः ॥३॥



## Pāpman (Wickedness)

**VI.26.1** O wickedness (pāpman) may you leave us free. Exerting control over us, you make us happy. O wickedness, may you establish me unharmed in the world of goodness (bhadrasya loke).

**VI.26.2** O wickedness (pāpman), surely we leave you, who does not leave us. At the turning point of the ways, may the wickedness follow some other one.

**VI.26.3** May the thousand-eyed and immortal (wickedness) dwell somewhere else other than with us. May it go to him, whom we hate. May you destroy him, whom we hate.

## Yamaḥ : Nir-ṛtiḥ (Perdition)

**VI.27.1** O enlightened ones, this dispatched pigeon (kapota), the messenger of calamity, who has arrived here seeking this place, we look after his comforts, and remove his fatigue. May there be weal for our bipeds and weal for our quadrupeds.

**VI.27.2** May this dispatched pigeon (kapota) be good to us, a harmless bird, O enlightened ones, that has come seeking our house. May the wise adorable Lord accept our offerings. May this winged weapon (hetiḥ) leave us unharmed

**VI.27.3** May this winged weapon not harm us. I settle on the fire place in the kitchen. May it be propitious to our cows and to our men. O enlightened ones, may this pigeon (kapota) do not harm to us here.

( २८ ) [illegible] सूक्तम्

(१-३) [illegible] सूक्तस्य [illegible] ऋषिः । यमो निर्ऋतिर्वा देवता । (१) [illegible], (२) द्वितीयाया अनुष्टुप्, (३) तृतीयायाश्च जगती छन्दांसि ॥

ऋचा कपोतं नुदत प्रणोदमिषं मदन्तः परि गां नयामः ।
संलोभयन्तो दुरिता पदानि हित्वा न ऊर्जं प्र पदात्पथिष्ठः ॥१॥
परीमे३ग्निमर्षत परीमे गामनेषत ।
देवेष्वक्रत श्रवः क इमाँ आ दधर्षति ॥२॥
यः प्रथमः प्रवतमाससाद बहुभ्यः पन्थामनुपस्पशानः ।
यो३स्येशे द्विपदो यश्चतुष्पदस्तस्मै यमाय नमो अस्तु मृत्यवे ॥३॥

ऋचा । कपोतम् । नुदत । प्रऽनोदम् । इषम् । मदन्तः । परि । गाम् । नयामः ।
सम्ऽलोभयन्तः । दुःऽइता । पदानि । हित्वा । नः । ऊर्जम् । प्र । पदात् । पथिष्ठः ॥ १ ॥
परि । इमे । अग्निम् । अर्षत । परि । इमे । गाम् । अनेषत ।
देवेषु । अक्रत । श्रवः । कः । इमान् । आ । दधर्षति ॥ २ ॥
यः । प्रथमः । प्रऽवतम् । आऽससाद । बहुऽभ्यः । पन्थाम् । अनुऽपस्पशानः ।
यः । अस्य । ईशे । द्विऽपदः । यः । चतुःऽपदः । तस्मै । यमाय । नमः । अस्तु । मृत्यवे ॥ ३ ॥

( २९ ) [illegible] सूक्तम्

(१-३) [illegible] सूक्तस्य [illegible] ऋषिः । यमो निर्ऋतिर्वा देवता । (१-२) प्रथमाद्वितीययो-[illegible], (३) तृतीयायाश्च [illegible] ॥

अमून्हेतिः पतत्रिणी न्येतु यदुलूको वदति मोघमेतत् ।
यद्वा कपोतः पदमग्नौ कृणोति ॥१॥
यौ ते दूतौ निर्ऋत इदमेतोऽप्रहितौ प्रहितौ वा गृहं नः ।
कपोतोलूकाभ्यामपदं तदस्तु ॥२॥

अमून् । हेतिः । पतत्रिणी । नि । एतु । यत् । उलूकः । वदति ॥ मोघम् । एतत् ।
यत् । वा । कपोतः । पदम् । अग्नौ । कृणोति ॥ १ ॥
यौ । ते । दूतौ । निःऽऋते । इदम् । आऽइतः । अप्रऽहितौ । प्रऽहितौ । वा । गृहम् । नः ।
कपोतऽउलूकाभ्याम् । अपदम् । तत् । अस्तु ॥ २ ॥



## Yamaḥ : Nir-ṛtiḥ (Perdition)

**VI.28.1** Send forth the pigeon, worthy for despatch, with vedic verses. Enjoying food, we make him go all around the earth. Obliterating the tracks of evil, leaving vigour for us, may he, the fleet-winged, fly forth.

**VI.28.2** They have approached the adorable Lord. They have sent (him) around the earth. They have gained glory among the enlightened ones. Who can venture to assail them ?

**VI.28.3** Who, exploring the path for many, reached the heavenly height first of all; who is the lord of all these bipeds and quadrupeds - to him, the controller, the death, be our homage (namaḥ astu).

## Yamaḥ : Nir-ṛtiḥ (Perdition)

**VI.29.1** On them yonder, may this winged weapon fall. What the owl (ulūka) screeches, or the pigeon makes its track into the fire, may that be ineffective.

**VI.29.2** These two messenger of yours, O perdition (nir-ṛti), whether sent or not sent by you, come to our house, may that house remain free from the tracks of the pigeon and the owl.

अवैरहत्यायेदमा पपत्यात्सुवीरताया इदमा ससद्यात् ।
पराङेव परा वद पराचीमनु संवतम् ।
यथा यमस्य त्वा गृहेरसं प्रतिचाकशानाभूकं प्रतिचाकशान् ॥३॥

अवैरऽहत्याय । इदम् । आ । पपत्यात् । सुऽवीरतायै । इदम् । आ । ससद्यात् ।
पराङ् । एव । परा । वद । पराचीम् । अनु । सम्ऽवतम् ।
यथा । यमस्य । त्वा । गृहे । अरसम् । प्रतिऽचाकशान् । आभूकम् । प्रतिऽचाकशान् ॥३॥

( ३० ) शमी सूक्तम्

(१–३) [illegible] ऋषिः । शमी देवता । (१) [illegible], (२) द्वितीयाया- त्रिष्टुप्, (३) [illegible] छन्दांसि ।

देवा इमं मधुना संयुतं यवं सरस्वत्यामधि मणावचर्कृषुः ।
इन्द्र आसीत्सीरपतिः शतक्रतुः कीनाशा आसन्मरुतः सुदानवः ॥१॥
यस्ते मदोऽवकेशो विकेशो येनाभिहस्यं पुरुषं कृणोषि ।
आरात्त्वदन्या वनानि वृक्षि त्वं शमि शतवल्शा वि रोह ॥२॥
बृहत्पलाशे सुभगे वर्षवृद्ध ऋतावरि ।
मातेव पुत्रेभ्यो मृड केशेभ्यः शमि ॥३॥

देवाः । इमम् । मधुना । सम्ऽयुतम् । यवम् । सरस्वत्याम् । अधि । मणौ । अचर्कृषुः ।
इन्द्रः । आसीत् । सीरऽपतिः । शतऽक्रतुः । कीनाशाः । आसन् । मरुतः । सुऽदानवः ॥ १ ॥
यः । ते । मदः । अवऽकेशः । विऽकेशः । येन । अभिऽहस्यम् । पुरुषम् । कृणोषि ।
आरात् । त्वत् । अन्याः । वनानि । वृक्षि । त्वम् । शमि । शतऽवल्शा । वि । रोह ॥२॥
बृहत्ऽपलाशे । सुऽभगे । वर्षऽवृद्धे । ऋतऽवरि ।
माताऽइव । पुत्रेभ्यः । मृड । केशेभ्यः । शमि ॥ ३ ॥



VI.29.3 May it fly in here never to (bring the rows of) slaying of our heroes; may it come with good (news) of our heroes. Unpleasant speech may you speak to the region afar towards the low depths, so that in the house of the controller (death), they see you as powerless. May they see you quite empty.

## Śamī

VI.30.1 The enlightened ones obtained by ploughing this barley (as if) mixed with honey near the river Sarasvatī on the land good as a jewel. The resplendent Lord, performer of hundreds of selfless actions, was the master of the plough and the cloud-bearing winds, the liberal bestowers of gifts, were the ploughmen.

VI.30.2 The intoxication is yours, which makes hair grow and increase and which enables a man to smile. I cut off other trees from your proximity. O śami, (Mimosa suma), may you grow up with hundreds of branches.

VI.30.3 O śami, having large leaves, fortunate one, growing in rains, O righteous one, may you be pleasing to hair like a mother to her sons.

( ३१ ) [illegible] सूक्तम्

(१–३) [illegible]

आयं गौः पृश्निरक्रमीदसदन्मातरं पुरः । पितरं च प्रयन्त्स्वः ॥१॥
अन्तश्चरति रोचना अस्य प्राणादपानतः । व्यख्यन्महिषः स्वः ॥२॥
त्रिंशद्धामा वि राजति वाक्पतङ्गो अशिश्रियत् । प्रति वस्तोरहर्द्युभिः ॥३॥

आ । अयम् । गौः । पृश्निः । अक्रमीत् । असदत् । मातरम् । पुरः ।
पितरम् । च । प्रऽयन् । स्वः ॥ १ ॥
अन्तः । चरति । रोचना । अस्य । प्राणात् । अपानतः । वि । अख्यत् । महिषः । स्वः ॥
त्रिंशत् । धाम । वि । राजति । वाक् । पतङ्गः । अशिश्रियत् ।
प्रति । वस्तोः । अहः । द्युऽभिः ॥ ३ ॥

( ३२ ) [illegible] सूक्तम्

(१–३) [illegible]

अन्तर्दावे जुहुता स्वे३तद्यातुधानक्षयणं घृतेन ।
आराद्रक्षांसि प्रति दह त्वमग्ने न नो गृहाणामुप तीतपासि ॥१॥
रुद्रो वो ग्रीवा अशरैत्पिशाचाः पृष्टीर्वोऽपि शृणातु यातुधानाः ।
वीरुद्वो विश्वतोवीर्या यमेन समजीगमत् ॥२॥
अभयं मित्रावरुणाविहास्तु नोऽर्चिषात्रिणो नुदतं प्रतीचः ।
मा ज्ञातारं मा प्रतिष्ठां विदन्त मिथो विघ्नाना उप यन्तु मृत्युम् ॥३॥

अन्तःऽदावे । जुहुत । सु । एतत् । यातुधानऽक्षयणम् । घृतेन ।
आरात् । रक्षांसि । प्रति । दह । त्वम् । अग्ने । न । नः । गृहाणाम् । उप । तीतपासि ॥ १ ॥
रुद्रः । वः । ग्रीवाः । अशरैत् । पिशाचाः । पृष्टीः । वः । अपि । शृणातु । यातुऽधानाः ।
वीरुत् । वः । विश्वतःऽवीर्या । यमेन । सम् । अजीगमत् ॥ २ ॥
अभयम् । मित्रावरुणौ । इह । अस्तु । नः । अर्चिषा । अत्रिणः । नुदतम् । प्रतीचः ।
मा । ज्ञातारम् । मा । प्रतिऽस्थाम् । विदन्त । मिथः । विऽघ्नानाः । उप । यन्तु । मृत्युम् ॥ ३ ॥



### Gauḥ - Earth

**VI.31.1** This fire, having strange-coloured flames, moves. He sits down before the mother (earth) in the form of domestic fire and goes to the father, the sky as well (in the form of the sun i.e., Svaḥ) (Also Yv. III.6)

**VI.31.2** The radiance of this fire penetrates within just as out-breath comes from in-breath. Thus the great fire illuminates the sun (Svaḥ). (Also Yv. III.7)

**VI.31.3** He resides in thirty places. Praise goes to the fire divine every day in the festive morning. (Also Yv. III.8)

### Agniḥ

**VI.32.1** In the blazing fire pour this destroyer of tormenting germs profusely along with the purified butter. O fire, may you burn the germs of wasting diseases far and near. May you not be so hot for our houses.

### Rudraḥ

**VI.32.2** O blood-suckers, the terrible punisher (rudra) has broken your necks. May he, O tormenting germs, crush your ribs also. The plant, having all sorts of power, has made you approach the death.

### Mitra - Varuṇa Pair

**VI.32.3** O Lord friendly and venerable (Mitra-Varuṇa) may there be freedom from fear for us here. May you thrust back the devourers with your glare. May they not reach the wise one, nor the stability. Attacking each other, may they go down to death.

(३३) त्रयस्त्रिंशं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य जाटिकायन ऋषिः । इन्द्रो देवता । (१, ३) प्रथमातृतीययो- र्गायत्री, (२) द्वितीयायाश्चानुष्टुप् छन्दसी ॥

यस्येदमा रजो युजस्तुजे जना वनं स्वः । इन्द्रस्य रन्त्यं बृहत् ॥१॥
नाधृष आ दधृषते धृषाणो धृषितः शवः ।
पुरा यथा व्यथिः श्रव इन्द्रस्य नाधृषे शवः ॥२॥
स नो ददातु तां रयिमुरुं पिशङ्गसंदृशम् । इन्द्रः पतिस्तुविष्टमो जनेष्वा ॥३॥

यस्य । इदम् । आ । रजः । युजः । तुजे । जनाः । वनम् । स्वः । इन्द्रस्य । रन्त्यम् । बृहत् ॥ १ ॥

न । आऽधृषे । आ । दधृषते । धृषाणः । धृषितः । शवः ।
पुरा । यथा । व्यथिः । श्रवः । इन्द्रस्य । न । आऽधृषे । शवः ॥ २ ॥

सः । नः । ददातु । ताम् । रयिम् । उरुम् । पिशङ्गऽसंदृशम् ।
इन्द्रः । पतिः । तुविऽतमः । जनेषु । आ ॥ ३ ॥

(३४) चतुस्त्रिंशं सूक्तम्

(१-५) पञ्चर्चस्यास्य सूक्तस्य चातन ऋषिः । अग्निर्देवता । गायत्री छन्दः ॥

प्राग्नये वाचमीरय वृषभाय क्षितीनाम् । स नः पर्षदति द्विषः ॥१॥
यो रक्षांसि निजूर्वत्यग्निस्तिग्मेन शोचिषा । स नः पर्षदति द्विषः ॥२॥

प्र । अग्नये । वाचम् । ईरय । वृषभाय । क्षितीनाम् ।
सः । नः । पर्षत् । अति । द्विषः ॥ १ ॥

यः । रक्षांसि । निऽजूर्वति । अग्निः । तिग्मेन । शोचिषा । सः । नः ।०॥ २ ॥



### Indraḥ

**VI.33.1** Whose this pleasing force is mobilized for destruction of enemies, O men, worship the great and beautiful light of the resplendent Lord.

**VI.33.2** He is never dared against (nādhṛṣa). His daring strength dares against the darers. As in the old days, the tormenting glorious strength of the resplendent Lord, has never been dared against.

**VI.33.3** The resplendent Lord is the mightiest (master) Lord among the people. May He bestow on us the vast wealth of golden colour (piśaṅga sandṛśam).

### Agniḥ

**VI.34.1** Direct your speech to the adorable Lord, showerer of bounties on these worlds. May He get us past our enemies well-protected.

**VI.34.2** The adorable Lord, who destroys the harmful influences (rakṣas) with His intense blaze, may He get us past our enemies well-protected.

यः परस्याः परावतस्तिरो धन्वातिरोचते । स नः पर्षदति द्विषः ॥३॥
यो विश्वाभि विपश्यति भुवना सं च पश्यति । स नः पर्षदति द्विषः ॥४॥
यो अस्य पारे रजसः शुक्रो अग्निरजायत । स नः पर्षदति द्विषः ॥५॥

यः । परस्याः । पराऽवतः । तिरः । धन्व । अतिऽरोचते । सः । नः ।०॥ ३ ॥

यः । विश्वा । अभि । विऽपश्यति । भुवना । सम् । च । पश्यति । सः । नः ।०॥ ४ ॥

यः । अस्य । पारे । रजसः । शुक्रः । अग्निः । अजायत । सः । नः ।०॥५॥

( ३५ ) पञ्चत्रिंशं सूक्तम्

(१–३) तृचस्यास्य सूक्तस्य कौशिक ऋषिः । वैश्वानरो देवता । गायत्री छन्दः ॥

वैश्वानरो न ऊतय आ प्र यातु परावतः । अग्निर्नः सुष्टुतीरुप ॥१॥
वैश्वानरो न आगमदिमं यज्ञं सजूरुप । अग्निरुक्थेष्वंहसु ॥२॥
वैश्वानरोऽङ्गिरसां स्तोममुक्थं च चाक्लृपत् । ऐषु द्युम्नं स्वर्यमत् ॥३॥

वैश्वानरः । नः । ऊतये । आ । प्र । यातु । पराऽवतः ।
अग्निः । नः । सुऽस्तुतीः । उप ॥ १ ॥
वैश्वानरः । नः । आ । अगमत् । इमम् । यज्ञम् । सऽजूः । उप ।
अग्निः । उक्थेषु । अंहऽसु ॥ २ ॥
वैश्वानरः । अङ्गिरसाम् । स्तोमम् । उक्थम् । च । चक्लृपत् ।
आ । एषु । द्युम्नम् । स्वः । यमत् ॥ ३ ॥



**VI.34.3** Who shines across the places remoter than remote, may He get us past our enemies well-protected.

**VI.34.4** Who looks towards all carefully and who observes all the beings at a time, may He get us past our enemies well-protected.

**VI.34.5** Who, the bright fire, appears beyond this firmament, may He get us past our enemies well-protected.

## Vaiśvānara : Cosmic Man

**VI.35.1** May the adorable Lord, benefactor of all men, come from afar for our succour and listen to our nice praises.

**VI.35.2** The adorable Lord, benefactor of all men, has come to this sacrifice of ours with friendly feeling hearing our praise-songs in the time of distress.

**VI.35.3** The benefactor of all men shapes the praises and songs of austere wise one (angiras), and sets shining light in them.

(३६) षट्त्रिंशं सूक्तम्

(१-३) [illegible] सूक्तस्याथर्वा ऋषिः । अग्निर्देवता । गायत्री छन्दः ॥

ऋतावानं वैश्वानरमृतस्य ज्योतिषस्पतिम् । अजस्रं घर्ममीमहे ॥१॥
स विश्वा प्रति चाक्लृप ऋतूंरुत्सृजते वशी । यज्ञस्य वय उत्तिरन् ॥२॥
अग्निः परेषु धामसु कामो भूतस्य भव्यस्य । सम्राडेको वि राजति ॥३॥

ऋतऽवानम् । वैश्वानरम् । ऋतस्य । ज्योतिषः । पतिम् । अजस्रम् । घर्मम् । ईमहे ॥१॥
सः । विश्वा । प्रति । चक्लृपे । ऋतून् । उत् । सृजते । वशी ।
यज्ञस्य । वयः । उत्ऽतिरन् ॥ २ ॥
अग्निः । परेषु । धामऽसु । कामः । भूतस्य । भव्यस्य ।
सम्ऽराट् । एकः । वि । राजति ॥ ३ ॥

(३७) सप्तत्रिंशं सूक्तम्

(१-३) [illegible] सूक्तस्याथर्वा ऋषिः । चन्द्रमा देवता । अनुष्टुप् छन्दः ॥

उप प्रागात्सहस्राक्षो युक्त्वा शपथो रथम् ।
शप्तारमन्विच्छन्मम वृक इवाविमतो गृहम् ॥१॥
परि णो वृङ्ग्धि शपथ ह्रदमग्निरिवा दहन् ।
शप्तारमत्र नो जहि दिवो वृक्षमिवाशनिः ॥२॥
यो नः शपादशपतः शपतो यश्च नः शपात् ।
शुने पेष्ट्रमिवावक्षामं तं प्रत्यस्यामि मृत्यवे ॥३॥

उप । प्र । अगात् । सहस्रऽअक्षः । युक्त्वा । शपथः । रथम् ।
शप्तारम् । अनुऽइच्छन् । मम । वृकःऽइव । अविऽमतः । गृहम् ॥ १ ॥
परि । नः । वृङ्ग्धि । शपथ । ह्रदम् । अग्निःऽइव । दहन् ।
शप्तारम् । अत्र । नः । जहि । दिवः । वृक्षम्ऽइव । अशनिः ॥ २ ॥
यः । नः । शपात् । अशपतः । शपतः । यः । च । नः । शपात् ।
शुने । पेष्ट्रम्ऽइव । अवऽक्षामम् । तम् । प्रति । अस्यामि । मृत्यवे ॥ ३ ॥



## Agniḥ

**VI.36.1** We pray to the benefactor of all men, the righteous (ṛtāvān), the lord of the light of eternal law blazing ceaselessly.

**VI.36.2** He has shaped all (the creatures) and He the controlling one creates the seasons, furthering the vigour of the sacrifice.

**VI.36.3** The adorable Lord, the desire of all the beings and would-be beings, shines in distant abodes as the only sovereign ruler.

## Candramāḥ

**VI.37.1** The thousand-eyed curse, having yoked his chariot, has come here seeking him, who cursed me, just as a wolf goes to the house of a sheep-owner.

**VI.37.2** O curse, may you leave us unharmed, like a burning fire a pond. May you destroy him here, who has cursed us (śaptāram) just as thunder-bolt of the sky destroys a tree.

**VI.37.3** Whoever curses us while we do not curse and who curses us while we curse him, the base one, I throw to death like a bone to a dog.

( ३८ ) अष्टात्रिंशं सूक्तम्

(१–४) वर्चस्कामोऽस्य सूक्तस्याथर्वा ऋषिः । बृहस्पतिस्त्विषिर्वा देवता । त्रिष्टुप् छन्दः ॥

सिंहे व्याघ्र उत या पृदाकौ त्विषिरग्नौ ब्राह्मणे सूर्ये या ।
इन्द्रं या देवी सुभगा जजान सा न ऐतु वर्चसा संविदाना ॥१॥
या हस्तिनि द्वीपिनि या हिरण्ये त्विषिरप्सु गोषु या पुरुषेषु ।
इन्द्रं या देवी सुभगा जजान सा न ऐतु वर्चसा संविदाना ॥२॥
रथे अक्षेष्वृषभस्य वाजे वाते पर्जन्ये वरुणस्य शुष्मे ।
इन्द्रं या देवी सुभगा जजान सा न ऐतु वर्चसा संविदाना ॥३॥
राजन्ये दुन्दुभावायतायामश्वस्य वाजे पुरुषस्य मायौ ।
इन्द्रं या देवी सुभगा जजान सा न ऐतु वर्चसा संविदाना ॥४॥

सिंहे । व्याघ्रे । उत । या । पृदाकौ । त्विषिः । अग्नौ । ब्राह्मणे । सूर्ये । या ।
इन्द्रम् । या । देवी । सुऽभगा । जजान । सा । नः । आ । एतु । वर्चसा । सम्ऽविदाना ॥ १ ॥
या । हस्तिनि । द्वीपिनि । या । हिरण्ये । त्विषिः । अप्ऽसु । गोषु । या । पुरुषेषु ।
इन्द्रम् । या । देवी । सुऽभगा । जजान । सा । नः । आ । एतु । वर्चसा । सम्ऽविदाना ॥
रथे । अक्षेषु । ऋषभस्य । वाजे । वाते । पर्जन्ये । वरुणस्य । शुष्मे ।
इन्द्रम् । या । देवी । सुऽभगा । जजान । सा । नः । आ । एतु । वर्चसा । सम्ऽविदाना ॥३॥
राजन्ये । दुन्दुभौ । आऽयतायाम् । अश्वस्य । वाजे । पुरुषस्य । मायौ ।
इन्द्रम् । या । देवी । सुऽभगा । जजान । सा । नः । आ । एतु । वर्चसा । सम्ऽविदाना ॥

( ३९ ) एकोनचत्वारिंशं सूक्तम्

(१–३) वर्चस्कामोऽस्य सूक्तस्याथर्वा ऋषिः । बृहस्पतिर्देवता । (१) प्रथमर्चो जगती, (२) द्वितीयायास्त्रिष्टुप्, (३) तृतीयायाश्चानुष्टुप् छन्दांसि ॥

यशो हविर्वर्धतामिन्द्रजूतं सहस्रवीर्यं सुभृतं सहस्कृतम् ।
प्रसर्स्राणमनु दीर्घाय चक्षसे हविष्मन्तं मा वर्धय ज्येष्ठतातये ॥१॥

यशः । हविः । वर्धताम् । इन्द्रऽजूतम् । सहस्रऽवीर्यम् । सुऽभृतम् । सहःऽकृतम् ।
प्रऽसर्स्राणम् । अनु । दीर्घाय । चक्षसे । हविष्मन्तम् । मा । वर्धय । ज्येष्ठऽतातये ॥ १ ॥



## Tviṣiḥ (Brilliance)

**VI.38.1** The energetic brilliance, which is there in lion, in tiger, and even in snake, in fire, in a holy person and in the sun; which divine and fortunate gives birth to the resplendent one, may she come to us overflowing with lustre.

**VI.38.2** The energetic brilliance which is there in elephant, in leapord, in gold, and even in waters, in cows and in manly persons; which divine and fortunate gives birth to the resplendent one, may she come to us overflowing with lustre.

**VI.38.3** The energetic brilliance, which is there in chariot, in dice, in the strength of bull, in storm, in rain-cloud, and in the vehemence of ocean; which divine and fortunate gives birth to the resplendent one, may she come to us overflowing with lustre.

**VI.38.4** Brilliance that is in a nobility, in the well-stretched arrow on a bow, in a war-drum, in horse's vigour and in the roar of a fighting man; which divine and fortunate gives birth to the resplendent one, may she come to us overflowing with lustre.

## Bṛhaspatiḥ

**VI.39.1** May my oblations, full of a thousand vigours, well-kept, obtained by conquests, and offered to the resplendent lord, augment glory. May you raise me, who moves forward and offers oblations, to the highest rank and far-extended vision.

अच्छा न इन्द्रं यशसं यशोभिर्यशस्विनं नमसाना विधेम ।
स नो रास्व राष्ट्रमिन्द्रजूतं तस्य ते रातौ यशसः स्याम ॥२॥
यशा इन्द्रो यशा अग्निर्यशाः सोमो अजायत ।
यशा विश्वस्य भूतस्याहमस्मि यशस्तमः ॥३॥

अच्छ । नः । इन्द्रम् । यशसम् । यशःऽभिः । यशस्विनम् । नमसानाः । विधेम ।
सः । नः । रास्व । राष्ट्रम् । इन्द्रऽजूतम् । तस्य । ते । रातौ । यशसः । स्याम ॥ २ ॥
यशाः । इन्द्रः । यशाः । अग्निः । यशाः । सोमः । अजायत ।
यशाः । विश्वस्य । भूतस्य । अहम् । अस्मि । यशःऽतमः ॥ ३ ॥

(४०) चत्वारिंशं सूक्तम्

(१-३) सम्पूर्णस्य सूक्तस्याथर्वा ऋषिः । (१-२) प्रथमाद्वितीययोर्मन्त्रोक्ताः, (३) तृतीयाया इन्द्रो देवता ।
(१-२) प्रथमाद्वितीययोर्जगती, (३) तृतीयाया अनुष्टुप् छन्दसी ॥

अभयं द्यावापृथिवी इहास्तु नोऽभयं सोमः सविता नः कृणोतु ।
अभयं नोऽस्तूर्वन्तरिक्षं सप्तऋषीणां च हविषाभयं नो अस्तु ॥१॥
अस्मै ग्रामाय प्रदिशश्चतस्र ऊर्जं सुभूतं स्वस्ति सविता नः कृणोतु ।
अशत्र्विन्द्रो अभयं नः कृणोत्वन्यत्र राज्ञामभि यातु मन्युः ॥२॥
अनमित्रं नो अधरादनमित्रं न उत्तरात् ।
इन्द्रानमित्रं नः पश्चादनमित्रं पुरस्कृधि ॥३॥

अभयम् । द्यावापृथिवी इति । इह । अस्तु । नः । अभयम् । सोमः । सविता । नः ।
कृणोतु । अभयम् । नः । अस्तु । उरु । अन्तरिक्षम् । सप्तऽऋषीणाम् । च । हविषा ।
अभयम् । नः । अस्तु ॥ १ ॥
अस्मै । ग्रामाय । प्रऽदिशः । चतस्रः । ऊर्जम् । सुऽभूतम् । स्वस्ति । सविता । नः ।
कृणोतु । अशत्रु । इन्द्रः । अभयम् । नः । कृणोतु । अन्यत्र । राज्ञाम् । अभि । यातु । मन्युः ॥
अनमित्रम् । नः । अधरात् । अनमित्रम् । नः । उत्तरात् ।
इन्द्र । अनमित्रम् । नः । पश्चात् । अनमित्रम् । पुरः । कृधि ॥ ३ ॥



**VI.39.2** With glories we worship the resplendent Lord, who is before us and is glorious with glories, in all our humility. As such, may you grant away (kingdom) promoted by the resplendent Lord; in your that grant, may we become glorious.

**VI.39.3** The resplendent Lord is glorious; glorious is adorable one; the blissful one is glorious. May I become the most glorious with the glory of all the beings. (Also Av. VI.58.3)

## As given in Verses

**VI.40.1** O heaven and earth, may there be freedom from fear (abhayam) here, may the blissful Lord and the inspirer Lord grant freedom from fear to us. May the vast midspace be free from fear for us; and may there be freedom from fear to us with the sacrificial offerings of the seven seers.

**VI.40.2** For this village of ours, may the four mid-quarters provide goodly sustenance (ūrjam). May the inspirer Lord look after our well-being. May the resplendent Lord arrange for us freedom from fear with no enemies whatsoever. May the wrath (manyu) of the kings be turned to some where else.

## Indraḥ

**VI.40.3** May there be foe-lessness (anamitram) for us from below, foe-lessness for us from above. O resplendent Lord, may you make us foe-less from behind, as well as foe-less from the front.

( ४१ ) एकचत्वारिंशं सूक्तम्

(१-३) एतस्य सूक्तस्य ब्रह्मा ऋषिः । मन्त्रोक्तमनआदयो देवताः । (१) प्रथमर्चो भुरिगनुष्टुप्, (२) द्वितीयाया अनुष्टुप्, (३) तृतीयायाश्च त्रिष्टुप् छन्दांसि ॥

मनसे चेतसे धिय आकूतय उत चित्तये । मत्यै श्रुताय चक्षसे विधेम हविषा वयम् ॥१॥
अपानाय व्यानाय प्राणाय भूरिधायसे । सरस्वत्या उरुव्यचे विधेम हविषा वयम् ॥२॥
मा नो हासिषुर्ऋषयो दैव्या ये तनूपा ये नस्तन्वस्तनूजाः ।
अमर्त्या मर्त्यॉं अभि नः सचध्वमायुर्धत्त प्रतरं जीवसे नः ॥३॥

मनसे । चेतसे । धिये । आऽकूतये । उत । चित्तये ।
मत्यै । श्रुताय । चक्षसे । विधेम । हविषा । वयम् ॥ १ ॥
अपानाय । विऽआनाय । प्राणाय । भूरिऽधायसे ।
सरस्वत्यै । उरुऽव्यचे । विधेम । हविषा । वयम् ॥ २ ॥
मा । नः । हासिषुः । ऋषयः । दैव्याः । ये । तनूऽपाः । ये । नः । तन्वः । तनूऽजाः ।
अमर्त्याः । मर्त्यान् । अभि । नः । सचध्वम् । आयुः । धत्त । प्रऽतरम् । जीवसे । नः ॥ ३ ॥

( ४२ ) द्विचत्वारिंशं सूक्तम्

(१-३) एतस्य सूक्तस्य भृग्वङ्गिरा ऋषिः । मन्युर्देवता । (१-२) प्रथमाद्वितीययोर्मन्त्रयोरनुष्टुप्, (३) तृतीयायाश्च भुरिगनुष्टुप् छन्दसी ॥

अव ज्यामिव धन्वनो मन्युं तनोमि ते हृदः ।
यथा संमनसौ भूत्वा सखायाविव सचावहै ॥१॥
सखायाविव सचावहा अव मन्युं तनोमि ते ।
अधस्ते अश्मनो मन्युमुपास्यामसि यो गुरुः ॥२॥
अभि तिष्ठामि ते मन्युं पार्ष्ण्या प्रपदेन च ।
यथावशो न वादिषो मम चित्तमुपायसि ॥३॥

अव । ज्याम्ऽइव । धन्वनः । मन्युम् । तनोमि । ते । हृदः ।
यथा । सम्ऽमनसौ । भूत्वा । सखायौऽइव । सचावहै ॥ १ ॥
सखायौऽइव । सचावहै । अव । मन्युम् । तनोमि । ते ।
अधः । ते । अश्मनः । मन्युम् । उप । अस्यामसि । यः । गुरुः ॥ २ ॥
अभि । तिष्ठामि । ते । मन्युम् । पार्ष्ण्या । प्रऽपदेन । च ।
यथा । अवशः । न । वादिषः । मम । चित्तम् । उपऽआयसि ॥ ३ ॥



## Manas and other Daivya Ṛṣis

**VI.41.1** For mental power, for intellectual power, for comprehension, for determined effort, for understanding, for resolution, for learning and for realization, we perform sacrifice with offerings.

**VI.41.2** For out-breath, for through-breath, for in-breath, the plentiful nourisher, and for the learning divine (sarasvatyā) of vast dimensions, we perform sacrifice with offerings.

**VI.41.3** May the divine seers, who are protectors of our bodies, who are our very bodies, and who are born of or bodies, never desert us. O immortals, may you remain closely associated with us, the mortals. Bestow long life on us for living nobly.

## Manyuḥ : Wrath : Anger

**VI.42.1** Like a bow-string from the bow, I take away anger from your heart, so that becoming of one mind, both of us may live like friends together.

**VI.42.2** May both of us live together like friends; I take away your anger. We bury your anger under a very large stone.

**VI.42.3** I trample upon your anger with my heel and sole, so that you may be of one mind with me and will not talk as if uncontrolled (avaśaḥ).

( ४३ ) [illegible] सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य भृग्वङ्गिरा ऋषिः । मन्युशमनं देवता । अनुष्टुप् छन्दः ॥

अयं दुर्भो विमन्युकः स्वाय चारणाय च ।
मन्योर्विमन्युकस्यायं मन्युशमन उच्यते ॥१॥
अयं यो भूरिमूलः समुद्रमवतिष्ठति ।
दर्भः पृथिव्या उत्थितो मन्युशमन उच्यते ॥२॥
वि ते हनव्यां शरणिं वि ते मुख्यां नयामसि ।
यथावशो न वादिषो मम चित्तमुपायसि ॥३॥

अयम् । दर्भः । विऽमन्युकः । स्वाय । च । अरणाय । च ।
मन्योः । विऽमन्युकस्य । अयम् । मन्युऽशमनः । उच्यते ॥ १ ॥
अयम् । यः । भूरिऽमूलः । समुद्रम् । अवऽतिष्ठति ।
दर्भः । पृथिव्याः । उत्ऽथितः । मन्युऽशमनः । उच्यते । ॥ २ ॥
वि । ते । हनव्याम् । शरणिम् । वि । ते । मुख्याम् । नयामसि[1] ।
यथा । अवशः । न । वादिषः । मम । चित्तम् । उपऽआयसि ॥ ३ ॥

( ४४ ) [illegible] सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य विश्वामित्र ऋषिः । मन्त्रोक्ता वनस्पतिर्वा देवता । (१-२) प्रथमाद्वितीययोरनुष्टुप्, (३) तृतीयायाश्च त्रिपदा महाबृहती छन्दसी ॥

अस्थाद्द्यौरस्थात्पृथिव्यस्थाद्विश्वमिदं जगत् ।
अस्थुर्वृक्षा ऊर्ध्वस्वप्नास्तिष्ठाद्रोगो अयं तव ॥१॥
शतं या भेषजानि ते सहस्रं संगतानि च ।
श्रेष्ठमास्रावभेषजं वसिष्ठं रोगनाशनम् ॥२॥
रुद्रस्य मूत्रमस्यमृतस्य नाभिः ।
विषाणका नाम वा असि पितॄणां मूलादुत्थिता वातीकृतनाशनी ॥३॥

अस्थात् । द्यौः । अस्थात् । पृथिवी । अस्थात् । विश्वम् । इदम् । जगत् ।
अस्थुः । वृक्षाः । ऊर्ध्वऽस्वप्नाः । तिष्ठात् । रोगः । अयम् । तव ॥ १ ॥
शतम् । या । भेषजानि । ते । सहस्रम् । सम्ऽगतानि । च ।
श्रेष्ठम् । आस्रावऽभेषजम् । वसिष्ठम् । रोगऽनाशनम् ॥ २ ॥
रुद्रस्य । मूत्रम् । असि । अमृतस्य । नाभिः ।
विऽसानका । नाम । वै । असि । पितॄणाम् । मूलात् । उत्थिता । वातीकृतऽनाशनी ॥ ३ ॥



## Manyu - Śamanam : Soother of Anger

**VI.43.1** This darbha (kuśa grass; Poa Cyno-suroides) is anger-remover for one's kinsman as well as for a stranger. This is called soother of the anger of a very furious person.

**VI.43.2** This darbha, which is rich in roots, and grows in watery places; the darbha, which springs out of earth, is called soother of anger.

**VI.43.3** We remove the trace of anger, set in your chain and set in your face (mouth), so that may not talk uncontrolled and be accordant with my heart.

### As in the Verses

**VI.44.1** The sky is still (asthāt), the earth is still; all this moving world has become still; still are the trees that sleep standing erect; may your this malady be stilled.

**VI.44.2** Whatever a hundred remedies are for you and a thousand are their combinations; among them this is the best cure for haemorrhage (āsrāva); it controls as well as roots out the disease.

**VI.44.3** You are the stream that the thunder cloud (rudra) pours, the close relations of ambrosia, or you are the viṣāṇakā plant (herb) springing from the origin of the elders and you are curer of the wind-caused diseases.

( ४५ ) पञ्चचत्वारिंशं सूक्तम्

[illegible]

परोऽपेहि मनस्पाप किमशस्तानि शंससि ।
परेहि न त्वा कामये वृक्षां वनानि सं चर गृहेषु गोषु मे मनः ॥१॥
अवशसा निःशसा यत्पराशसोपारिम जाग्रतो यत्स्वपन्तः ।
अग्निर्विश्वान्यप दुष्कृतान्यजुष्टान्यारे अस्मद्दधातु ॥२॥
यदिन्द्र ब्रह्मणस्पतेऽपि मृषा चरामसि ।
प्रचेता न आङ्गिरसो दुरितात्पात्वंहसः ॥३॥

पुरः । अप । इहि । मनःऽपाप । किम् । अशस्तानि । शंससि । परा । इहि । न । त्वा । कामये । वृक्षान् । वनानि । सम् । चर । गृहेषु । गोषु । मे । मनः ॥ १ ॥
अवऽशसा । निःऽशसा । यत् । पराऽशसा । उपऽआरिम । जाग्रतः । यत् । स्वपन्तः ।
अग्निः । विश्वानि । अप । दुःऽकृतानि । अजुष्टानि । आरे । अस्मत् । दधातु ॥ २ ॥
यत् । इन्द्र । ब्रह्मणः । पते । अपि । मृषा । चरामसि ।
प्रऽचेताः । नः । आङ्गिरसः । दुःऽइतात् । पातु । अंहसः ॥ ३ ॥

( ४६ ) षट्चत्वारिंशं सूक्तम्

[illegible]

यो न जीवोऽसि न मृतो देवानाममृतगर्भोऽसि स्वप्न ।
वरुणानी ते माता यमः पिताररुर्नामासि ॥१॥
विद्म ते स्वप्न जनित्रं देवजामीनां पुत्रोऽसि यमस्य करणः ।
अन्तकोऽसि मृत्युरसि ।
तं त्वा स्वप्न तथा सं विद्म स नः स्वप्न दुष्वप्न्यात्पाहि ॥२॥

यः । न । जीवः । असि । न । मृतः । देवानाम् । अमृतऽगर्भः । असि । स्वप्न ।
वरुणानी । ते । माता । यमः । पिता । अररुः । नाम । असि ॥१॥
विद्म । ते । स्वप्न । जनित्रम् । देवऽजामीनाम् । पुत्रः । असि । यमस्य । करणः ।
अन्तकः । असि । मृत्युः । असि । तम् । त्वा । स्वप्न । तथा । सम् । विद्म । सः । नः ।
स्वप्न । दुःऽस्वप्न्यात् । पाहि ॥ २ ॥



## Cure for Evil Dreams

**VI.45.1** O evil thought, go far away. What abominable things you suggest (Why do you suggest abominable things). Get away. I do not like you. Go and move among trees and forests. My heart is in my home and cows.

**VI.45.2** While awake or while asleep, by degrading speech, by discarding speech or by out-casting speech, whatever improper misdeeds we have done, may the adorable Lord remove and cast all of them far away from us.

**VI.45.3** O resplendent Lord, O Lord of divine knowledge, whatever (sin) we have committed through false-hood, may the fiery and conscientious one free us from that abominable (amhasaḥ) sin.

## Cure for Evil Dreams

**VI.46.1** You, who are neither alive nor dead, are full of ambrosia for the enlightened ones. Varuṇānī ( venerability) is your mother; Yama (law and justice) is your father; and you are Araruḥ by name.

**VI.46.2** O dream, we know your birth. You are the son of the sisters of the bounties of nature. You are an instrument of controller Lord (Yama). You are the one that causes an end (antaka). You are the death. O dream, we know you thoroughly as such. So may you, O dream, save us from evil dreams.

यथा कलां यथा शफं यथर्णं संनयन्ति ।
एवा दुष्वप्न्यं सर्वं द्विषते सं नयामसि ॥३॥

यथा । कलाम् । यथा । शफम् । यथा । ऋणम् । सम्ऽनयन्ति ।
एव । दुःऽस्वप्न्यम् । सर्वम् । द्विषते । सम् । नयामसि ॥ ३ ॥

( ४७ ) सप्तचत्वारिंशं सूक्तम्

(१–३) सूक्तस्यास्य सूक्तस्याङ्गिरसः प्रचेता यमश्च ऋषयः । (१) प्रथमर्चोऽग्निः, (२) द्वितीयाया विश्वे देवाः, (३) तृतीयायाश्च सौधन्वना देवताः । त्रिष्टुप् छन्दः ॥

अग्निः प्रातःसवने पात्वस्मान्वैश्वानरो विश्वकृद्विश्वशंभूः ।
स नः पावको द्रविणे दधात्वायुष्मन्तः सहभक्षाः स्याम ॥१॥
विश्वे देवा मरुत इन्द्रो अस्मानस्मिन्द्वितीये सवने न जह्युः ।
आयुष्मन्तः प्रियमेषां वदन्तो वयं देवानां सुमतौ स्याम ॥२॥
इदं तृतीयं सवनं कवीनामृतेन ये चमसमैरयन्त ।
ते सौधन्वनाः स्वरानशानाः स्विष्टिं नो अभि वस्यो नयन्तु ॥३॥

अग्निः । प्रातःऽसवने । पातु । अस्मान् । वैश्वानरः । विश्वऽकृत् । विश्वऽशंभूः ।
सः । नः । पावकः । द्रविणे । दधातु । आयुष्मन्तः । सहऽभक्षाः । स्याम ॥ १ ॥
विश्वे । देवाः । मरुतः । इन्द्रः । अस्मान् । अस्मिन् । द्वितीये । सवने । न । जह्युः ।
आयुष्मन्तः । प्रियम् । एषाम् । वदन्तः । वयम् । देवानाम् । सुऽमतौ । स्याम ॥ २ ॥
इदम् । तृतीयम् । सवनम् । कवीनाम् । ऋतेन । ये । चमसम् । ऐरयन्त ।
ते । सौधन्वनाः । स्वः । आनशानाः । सुऽइष्टिम् । नः । अभि । वस्यः । नयन्तु ॥

( ४८ ) अष्टचत्वारिंशं सूक्तम्

(१–३) सूक्तस्यास्य सूक्तस्याङ्गिरसः प्रचेता यमश्च ऋषयः । मन्त्रोक्ता देवताः । उष्णिक् छन्दः ॥

श्येनोऽसि गायत्रच्छन्दा अनु त्वा रभे ।
स्वस्ति मा सं वहास्य यज्ञस्योदृचि स्वाहा ॥१॥

श्येनः । असि । गायत्रऽछन्दाः । अनु । त्वा । आ । रभे ।
स्वस्ति । मा । सम् । वह । अस्य । यज्ञस्य । उत्ऽऋचि । स्वाहा ॥ १ ॥



**VI.46.3** As a sixteenth (kalā), as an eighth (śapham), as a whole debt (yatharṇam), they bring together all evil-dreaming (duḥ-ṣvapnam) for him who hates us. (Also Ṛg. VIII.47.17)

### Agniḥ

**VI.47.1** May the adorable Lord, benefactor of all men, creator of all and bestower of peace and happiness on all, guard us at the morning sacrifice (prātaḥ savana). May he, the purifier, place us among riches. May we have long life enjoying food together. (Saha-bhakṣāḥ)

### Viśvedevāḥ

**VI.47.2** May all the bounties of nature, cloud-bearing winds and the resplendent Lord not fail us at this second sacrifice (of the day) (duitīya savana). May we have long life and be in good books of the enlightened ones, always speaking what is pleasing to them.

### Sudhanvā

**VI.47.3** This third sacrifice (tṛtiya savana) of the day is meant for poets (omnivisioned persons), who move the bowls in proper way. May those, having excellent bows, and winners of the sublime happiness, lead (conduct) our good sacrifice to its richest fruition.

### As laid in the verses

**VI.48.1** You are śyena (falcon – one of excellent motion) having gāyatrī as metre. I start this libation for you. May you conduct me safely to the last verse of this sacrifice. Svāhā.

ऋभुरसि जगच्छन्दा अनु त्वा रभे ।
स्वस्ति मा सं वहास्य यज्ञस्योदृचि स्वाहा ॥२॥
वृषासि त्रिष्टुप्छन्दा अनु त्वा रभे ।
स्वस्ति मा सं वहास्य यज्ञस्योदृचि स्वाहा ॥३॥

ऋभुः । असि । जगत्ऽछन्दाः । अनु । त्वा । आ । रभे ।
स्वरित । मा । सम् । वह । अस्य । यज्ञस्य । उत्ऽऋचि । स्वाहा ॥ २ ॥

वृषा । असि । त्रिस्तुप्ऽछन्दाः । अनु । त्वा । आ । रभे ।
स्वस्ति । मा । सम् । वह । अस्य । यज्ञस्य । नुत्ऽऋचि । स्वाहा ॥ ३ ॥

( ४९ ) [illegible] सूक्तम्
(१-३) तृचस्यास्य सूक्तस्य गार्ग्य ऋषिः । अग्निर्देवता । (१) प्रथमर्चोऽनुष्टुप्,
(२) द्वितीयाया जगती, (३) तृतीयायाश्च त्रिष्टुब्जगती छन्दांसि ॥

नहि ते अग्ने तन्वः क्रूरमानंश मर्त्यः ।
कपिर्बभस्ति तेजनं स्वं जरायु गौरिव ॥१॥
मेष इव वै सं च वि चोर्व१च्यसे यदुत्तरद्रावुपरश्च खादतः ।
शीर्ष्णा शिरोऽप्ससाप्सो अर्दयन्नंशून्बभस्ति हरितेभिरासभिः ॥२॥
सुपर्णा वाचमक्रतोप द्यव्याखरे कृष्णा इषिरा अनर्तिषुः ।
नि यन्नियन्त्युपरस्य निष्कृतिं पुरू रेतो दधिरे सूर्यश्रितः ॥३॥

नहि । ते । अग्ने । तन्वः । क्रूरम् । आनंशे । मर्त्यः ।
कपिः । बभस्ति । तेजनम् । स्वम् । जरायु । गौःऽइव ॥ १ ॥
मेषःऽइव । वै । सम् । च । वि । च । उरु । अच्यसे । यत् । उत्तरऽद्रौ । उपरः । च । खादतः ।
शीर्ष्णा । शिरः । अप्ससा । अप्सः । अर्दयन् । अंशून् । बभस्ति । हरितेभिः । आसऽभिः ॥२॥
सुऽपर्णाः । वाचम् । अक्रत । उप । द्यवि । आऽखरे । कृष्णाः । इषिराः । अनर्तिषुः ।
नि । यत् । निऽयन्ति । उपरस्य । निःऽकृतिम् । पुरु । रेतः । दधिरे । सूर्यऽश्रितः ॥ ३ ॥



**VI.48.2** You are ṛbhu (skilled technician) having jagatī as metre. I start this libation for you. May you conduct me safely to the last verse of this sacrifice. Svāhā.

**VI.48.3** You are vṛṣa (full of manly vigour) having triṣṭup as metre. I start this libation for you. May you conduct me safely to the last verse of this sacrifice. Svāhā.

## Agniḥ

**VI.49.1** O fire, a mortal can never attain (endure) the cruelty of your self. (Due to it) the monkey (kapiḥ) chews the reed (of an arrow) as a cow eats her after-birth. (jarāyu).

**VI.49.2** Verily, like a ram (meṣaḥ) you move forward (to butt in the other) and draw back (to strike again) and in a nice forest stay nibbling grass. Pressing head against head and body against body, you eat soft stalks with your yellow mouths.

**VI.49.3** The birds of beautiful wings have sent their cry in the sky. The dark ones, moving fast, have danced in their abodes. Your flames bursting out, go for formation of clouds. Having reached the sun, they hold up plenty of seed (water or retaḥ)

(५०) पञ्चाशं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्याथर्वा ऋषिः । अश्विनौ देवते । (१) प्रथमर्चो विराड्जगती, (२-३) द्वितीयातृतीययोश्च पथ्यापङ्क्तिश्छन्दसी ॥

हतं तर्दं समङ्कमाखुमश्विना छिन्तं शिरो अपि पृष्टीः शृणीतम् ।
यवान्नेददानपि नह्यतं मुखमथाभयं कृणुतं धान्याय ॥१॥
तर्द है पतङ्ग है जभ्य हा उपक्वस ।
ब्रह्मेवासंस्थितं हविरनदन्त इमान्यवानहिंसन्तो अपोदित ॥२॥
तर्दापते वघापते तृष्टजम्भा आ शृणोत मे ।
य आरण्या व्यद्वरा ये के च स्थ व्यद्वरास्तान्त्सर्वाञ्जम्भयामसि ॥३॥

हतम् । तर्दम् । समऽअङ्कम् । आखुम् । अश्विना । छिन्तम् । शिरः । अपि । पृष्टीः । शृणीतम् ।
यवान् । न । इत् । अदान् । अपि । नह्यतम् । मुखम् । अथ । अभयम् । कृणुतम् । धान्याय ॥१॥
तर्द । है । पतङ्ग । है । जभ्य । हा । उपऽक्वस । ब्रह्माऽइव । असम्ऽस्थितम् । हविः ।
अनदन्तः । इमान् । यवान् । अहिंसन्तः । अपऽउदित ॥ २ ॥
तर्दऽपते । वघाऽपते । तृष्टऽजम्भाः । आ । शृणोत । मे । ये । आरण्याः । विऽअद्वराः ।
ये । के । च । स्थ । विऽअद्वराः । तान् । सर्वान् । जम्भयामसि ॥ ३ ॥

(५१) एकपञ्चाशं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य शन्तातिर्ऋषिः । (१-२) प्रथमाद्वितीययोरापः, (३) तृतीयायाश्च वरुणो देवताः ।
(१) प्रथमर्चो गायत्री, (२) द्वितीयायास्त्रिष्टुप्, (३) तृतीयायाश्च जगती छन्दांसि ॥

वायोः पूतः पवित्रेण प्रत्यङ् सोमो अति द्रुतः । इन्द्रस्य युज्यः सखा ॥१॥
आपो अस्मान्मातरः सूदयन्तु घृतेन नो घृतप्वः पुनन्तु ।
विश्वं हि रिप्रं प्रवहन्ति देवीरुदिदाभ्यः शुचिरा पूत एमि ॥२॥
यत्किं चेदं वरुण दैव्ये जनेऽभिद्रोहं मनुष्याश्चरन्ति ।
अचित्त्या चेत्तव धर्मा युयोपिम मा नस्तस्मादेनसो देव रीरिषः ॥३॥

वायोः । पूतः । पवित्रेण । प्रत्यङ् । सोमः । अति । द्रुतः । इन्द्रस्य । युज्यः । सखा ॥१॥
आपः । अस्मान् । मातरः । सूदयन्तु । घृतेन । नः । घृतऽप्वः । पुनन्तु । विश्वम् । हि ।
रिप्रम् । प्रऽवहन्ति । देवीः । उत् । इत् । आभ्यः । शुचिः । आ । पूतः । एमि ॥ २ ॥
यत् । किम् । च । इदम् । वरुण । दैव्ये । जने । अभिऽद्रोहम् । मनुष्याः । चरन्ति ।
अचित्त्या । च । इत् । तव । धर्म । युयोपिम । मा । नः । तस्मात् । एनसः । देव । रीरिषः ॥



## Aśvin - Pair

**VI.50.1** O Aśvin-pair, please kill the tarda or borer; destroy the samaṅka, the rat; destroy the ākhu (mouse); I cut off their heads and crush their ribs, so that they do not eat the yava (barley); let our corn (dhānya) grow, free from danger.

**VI.50.2** Hey, borer (tarda), hey, locust (pataṅga), hey, grinder (upakvasa), just as a priest leaves the incomplete sacrifice, goes away without devouring or injuring this corn. (Hai and Ha = oh = Hey; interjections)

**VI.50.3** O lord of destroyers (borers), O lord of rats (ākhuḥ), you having sharp teeth (tṛṣṭa-jambhā), listen to me. The devourers of the wind, and whosoever are other devourers (vyadvarā) you are, all of them shall crush and destroy.

## Somaḥ

**VI.51.1** Purified with Vāyu's purifier, Soma has run over opposite (pratyaṅ), Indra's favourite associate. (Vāyu = lord of movement; Indra = resplendent Lord; Soma = Lord of Bliss) (Also Yv. XIX.3)

## Āpaḥ (Waters)

**VI.51.2** May waters, the mothers of all, cleanse us. May the purifiers of butter purify us with melted butter. These divine waters carry off all the dirt of sins. Purified with these all around, I rise up clean and pure. (Also Yv. IV.2)

## Varuṇaḥ

**VI.51.3** Whatever offence men commit against divine beings, and whichever your law they violate through ignorance, may you not, O venerable Lord, be harsh to us on account of that iniquity. (Also Ṛg. VII.89.5)

( ५२ ) द्विपञ्चाशं सूक्तम्

(१-३) एतस्यास्य सूक्तस्य भागलिर्ऋषिः । मन्त्रोक्ता देवता । अनुष्टुप् छन्दः ।

उत्सूर्यो दिव एति पुरो रक्षांसि निजूर्वन् । आदित्यः पर्वतेभ्यो विश्वदृष्टो अदृष्टहा ॥१॥
नि गावो गोष्ठे असदन्नि मृगासो अविक्षत । न्यूर्मयो नदीनां न्यदृष्टा अलिप्सत ॥२॥
आयुर्ददं विपश्चितं श्रुतां कण्वस्य वीरुधम् ।
आभारिषं विश्वभेषजीमस्यादृष्टान्नि शमयत् ॥३॥

उत् । सूर्यः । दिवः । एति । पुरः । रक्षांसि । निऽजूर्वन् ।
आदित्यः । पर्वतेभ्यः । विश्वऽदृष्टः । अदृष्टऽहा ॥ १ ॥
नि । गावः । गोऽस्थे । असदन् । नि । मृगासः । अविक्षत ।
नि । ऊर्मयः । नदीनाम् । नि । अदृष्टाः । अलिप्सत ॥ २ ॥
आयुःऽददम् । विपःऽचितम् । श्रुताम् । कण्वस्य । वीरुधम् ।
आ । अभारिषम् । विश्वऽभेषजीम् । अस्य । अदृष्टान् । नि । शमयत् ॥ ३ ॥

( ५३ ) त्रिपञ्चाशं सूक्तम्

(१-३) एतस्यास्य सूक्तस्य बृहच्छुक्र ऋषिः । मन्त्रोक्ता देवताः । (१) प्रथमर्चो जगती,
(२-३) द्वितीयातृतीययोश्च त्रिष्टुप् छन्दसी ।

द्यौश्च म इदं पृथिवी च प्रचेतसौ शुक्रो बृहन्दक्षिणया पिपर्तु ।
अनु स्वधा चिकितां सोमो अग्निर्वायुर्नः पातु सविता भगश्च ॥१॥
पुनः प्राणः पुनरात्मा न ऐतु पुनश्चक्षुः पुनरसुर्न ऐतु ।
वैश्वानरो नो अदब्धस्तनूपा अन्तस्तिष्ठाति दुरितानि विश्वा ॥२॥
सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सं शिवेन ।
त्वष्टा नो अत्र वरीयः कृणोत्वनु नो मार्ष्टु तन्वो यद्विरिष्टम् ॥३॥

द्यौः । च । मे । इदम् । पृथिवी । च । प्रऽचेतसौ । शुक्रः । बृहन् । दक्षिणया । पिपर्तु ।
अनु । स्वधा । चिकिताम् । सोमः । अग्निः । वायुः । नः । पातु । सविता । भगः । च ॥
पुनः । प्राणः । पुनः । आत्मा । नः । आ । एतु । पुनः । चक्षुः । पुनः । असुः । नः । आ । एतु ।
वैश्वानरः । नः । अदब्धः । तनूऽपाः । अन्तः । तिष्ठाति । दुःऽइतानि । विश्वा ॥ २ ॥
सम् । वर्चसा । पयसा । सम् । तनूभिः । अगन्महि । मनसा । सम् । शिवेन ।
त्वष्टा । नः । अत्र । वरीयः । कृणोतु । अनु । नः । मार्ष्टु । तन्वः । यत् । विऽरिष्टम् ॥ ३ ॥



**Sūryaḥ; Sun**

**VI.52.1** From the mountains, the sun, the Āditya (sun of each month) rising up in the sky killing the germs (of wasting diseases) before him - visible to all and killing the invisible (venomous creatures).

**Gāvaḥ : Cows**

**VI.52.2** When cows settle in their stalls, the wild beasts retreat to their lairs, the waves of the rivers calm down, then the unseen creatures infect me with their venom. (Also Ṛg. I. 191.4)

**Bheṣajam (herb : a cure)**

**VI.52.3** I have brought the famous herb, that gives life to the patient, energises the intellect. It is a cure-all remedy. May it ameliorate the unseen diseases of this man. (May it remove the poison of unseen creatures from this man).

**Earth and others as in the verses**

**VI.53.1** May favourably inclined heaven and earth, and the great bright one (the sun) sustain all this of mine with liberal gift. May the lord blissful and adorable favour me with provisions. May the omnipresent (vāyu), the impeller and bestower of fortunes protect us.

**VI.53.2** May the out-breath and the soul come again to us. May the vision and life come again to us. May the benefactor of all men, the irrepressible protector of our bodies, stay between us and the evils.

**VI.53.3** May we be blessed with intellectual lustre, vigour, bodies and noble mind. May liberally giving cosmic architect (tvaṣṭṛ) make us superior here and remove every blemish from our bodies. (Also Yv. VIII.14)

(५४) चतुष्पञ्चाशं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । अग्नीषोमौ देवते । अनुष्टुप् छन्दः ।

इदं तद्युज उत्तरमिन्द्रं शुम्भाम्यष्टये ।
अस्य क्षत्रं श्रियं महीं वृष्टिरिव वर्धया तृणम् ॥१॥
अस्मै क्षत्रमग्नीषोमावस्मै धारयतं रयिम् ।
इमं राष्ट्रस्याभीवर्गे कृणुतं युज उत्तरम् ॥२॥
सबन्धुश्चासबन्धुश्च यो अस्माँ अभिदासति ।
सर्वं तं रन्धयासि मे यजमानाय सुन्वते ॥३॥

इदम् । तत् । युजे । उत्ऽतरम् । इन्द्रम् । शुम्भामि । अष्टये ।
अस्य । क्षत्रम् । श्रियम् । महीम् । वृष्टिःऽइव । वर्धय । तृणम् ॥ १ ॥
अस्मै । क्षत्रम् । अग्नीषोमौ । अस्मै । धारयतम् । रयिम् ।
इमम् । राष्ट्रस्य । अभिऽवर्गे । कृणुतम् । युजे । उत्ऽतरम् ॥ २ ॥
सऽबन्धुः । च । असबन्धुः । च । यः । अस्मान् । अभिऽदासति ।
सर्वम् । तम् । रन्धयासि । मे । यजमानाय । सुन्वते ॥ ३ ॥

(५५) पञ्चपञ्चाशं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य ब्रह्मा ऋषिः । (१) प्रथमर्चो विश्वे देवाः, (२-३) द्वितीयातृतीययोश्च रुद्रो देवता । (१, ३) प्रथमातृतीययोर्जगती, (२) द्वितीयायाश्च त्रिष्टुप् छन्दसी ।

ये पन्थानो बहवो देवयाना अन्तरा द्यावापृथिवी संचरन्ति ।
तेषामज्यानिं यतमो वहाति तस्मै मा देवाः परि धत्तेह सर्वे ॥१॥
ग्रीष्मो हेमन्तः शिशिरो वसन्तः शरद्वर्षाः स्विते नो दधात ।
आ नो गोषु भजता प्रजायां निवात इद्वः शरणे स्याम ॥२॥
इदावत्सराय परिवत्सराय संवत्सराय कृणुता बृहन्नमः ।
तेषां वयं सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम ॥३॥

ये । पन्थानः । बहवः । देवऽयानाः । अन्तरा । द्यावापृथिवी इति । सम्ऽचरन्ति ।
तेषाम् । अज्यानिम् । यतमः । वहाति । तस्मै । मा । देवाः । परि । धत्त । इह । सर्वे ॥१॥
शिरः । वसन्तः । शरत् । वर्षाः । सुऽइते । नः । दधात ।
जत । आ । प्रऽजायाम् । निऽवाते । इत् । वः । शरणे । स्याम ॥२॥
सराय । सम्ऽवत्सराय । कृणुत । बृहत् । नमः ।
तौ । यज्ञियानाम् । अपि । भद्रे । सौमनसे । स्याम ॥ ३ ॥



## Agni - Soma Pair

**VI.54.1** I unite this work with a better one. I adore the resplendent Lord for fulfillment of desires. (O resplendent Lord), may you increase the authority, and great splendour of this sacrificer, as the rain helps the growth of grass.

**VI.54.2** O Lord adorable and blissful, may you bestow authority and riches on this sacrificer. May you place him rightly higher among the prominent chiefs of the kingdom.

**VI.54.3** Whether related or unrelated, whoever assails us - all such persons may you bring to my subjugation. I am the sacrificer, offerer of Soma libations.

## Viśvedevāḥ

**VI.55.1** Those numerous paths, that run between heaven and earth and are frequented by the enlightened ones, whichever of them carry one to prosperity, may you all the enlightened ones lead me on that very path here.

## Rudraḥ

**VI.55.2** Summer, winter, cold season, spring, autumn and rains - may you keep us in perfect weal. Grant us our share of kine and children. May we enjoy your unperturbed shelter. ( Six seasons : Grīṣma, Hemanta, Śiśira, Vasanta, Śarad, and Varṣā)

**VI.55.3** Grow abundant food-grains for the third year, the second and the first year. May we ever be held in good grace and benign friendship of those, who are engaged in selfless actions. (yajñiyānām = yājñika = people engaged in public service, i.e., in selfless actions.)

(५६) षट्पञ्चाशं सूक्तम्

(१-३) ऋषयस्त्वस्य सूक्तस्य शन्तातिर्ऋषिः। (१) प्रथमर्चो विश्वे देवाः, (२-३) द्वितीयातृतीययोश्च रुद्रो देवता।
(१) प्रथमाया उष्णिग्गर्भा पथ्यापङ्क्तिः, (२) द्वितीयाया अनुष्टुप्, (३) तृतीयायाश्च निचृदनुष्टुप् छन्दांसि ॥

मा नो॑ दे॒वा अहि॑र्वधी॒त्सतो॑कान्त्स॒हपू॑रुषान् ।
संय॑तं॒ न वि ष्प॑रद्व्या॒त्तं न सं य॑म॒न्नमो॑ देवज॒नेभ्यः॑ ॥१॥
नमो॑ऽस्त्वसि॒ताय॒ नम॒स्तिर॑श्चिराजये ।
स्व॒जाय॑ ब॒भ्रवे॒ नमो॒ नमो॑ देवज॒नेभ्यः॑ ॥२॥
सं ते॑ हन्मि द॒ता द॒तः समु॑ ते॒ हन्वा॒ हनू॑ ।
सं ते॑ जि॒ह्वया॑ जि॒ह्वां सम्वा॒स्नाह॑ आ॒स्य॑म् ॥३॥

मा । नः॒ । दे॒वाः॒ । अहिः॑ । व॒धी॒त् । सऽतो॑कान् । स॒हऽपु॑रुषान् ।
सम्ऽय॑तम् । न । वि । स्प॒र॒त् । वि॒ऽआत्त॑म् । न । सम् । य॒म॒त् । नमः॑ । दे॒व॒ऽज॒नेभ्यः॑ ॥ १ ॥
नमः॑ । अ॒स्तु॒ । अ॒सि॒ताय॑ । नमः॑ । तिर॑श्चिऽराजये ।
स्व॒जाय॑ । ब॒भ्रवे॑ । नमः॑ । नमः॑ । दे॒व॒ऽज॒नेभ्यः॑ ॥ २ ॥
सम् । ते॒ । ह॒न्मि॒ । द॒ता । द॒तः । सम् । ऊं॒ इति॑ । ते॒ । हन्वा॑ । हनू॒ इति॑ ।
सम् । ते॒ । जि॒ह्वया॑ । जि॒ह्वाम् । सम् । ऊं॒ इति॑ । आ॒स्ना । अ॒हे॒ । आ॒स्य॑म् ॥ ३ ॥

(५७) सप्तपञ्चाशं सूक्तम्

(१-३) ऋषयस्त्वस्य सूक्तस्य शन्तातिर्ऋषिः। रुद्रो देवता [ (३) तृतीयाया रुद्रो मन्त्रोक्ता वा ]। (१-२) प्रथमाद्वितीययो-रनुष्टुप्, (३) तृतीयायाश्च पथ्याबृहती छन्दसी ॥

इ॒दमिद्वा उ॑ भेष॒जमि॒दं रु॒द्रस्य॑ भेष॒जम् ।
येनेषु॒मेक॑तेजनां श॒तश॑ल्यामप॒ब्रव॑त् ॥१॥
जा॒ला॒षेणा॒भि षि॑ञ्चत जाला॒षेणोप॑ सिञ्चत ।
जा॒ला॒षमु॒ग्रं भे॑ष॒जं तेन॑ नो मृड जी॒वसे॑ ॥२॥
शं च॑ नो॒ मय॑श्च नो॒ मा च॑ नः॒ किं च॒नाम॑मत् ।
क्ष॒मा रपो॒ विश्वं॑ नो अस्तु भेष॒जं सर्वं॑ नो अस्तु भेष॒जम् ॥३॥

इ॒दम् । इत् । वै । ऊं॒ इति॑ । भे॒ष॒जम् । इ॒दम् । रु॒द्रस्य॑ । भे॒ष॒जम् ।
येन॑ । इषु॑म् । एक॑ऽतेजनाम् । श॒तऽश॑ल्याम् । अ॒प॒ऽब्रव॑त् ॥ १ ॥
जा॒ला॒षेण॑ । अ॒भि । सि॒ञ्च॒त॒ । जा॒ला॒षेण॑ । उप॑ । सि॒ञ्च॒त॒ ।
जा॒ला॒षम् । उ॒ग्रम् । भे॒ष॒जम् । तेन॑ । नः॒ । मृ॒ड॒ । जी॒वसे॑ ॥ २ ॥
शम् । च॒ । नः॒ । मयः॑ । च॒ । नः॒ । मा । च॒ । नः॒ । किम् । च॒न । आ॒म॒म॒त् ।
क्ष॒मा । रपः॑ । विश्व॑म् । नः॒ । अ॒स्तु॒ । भे॒ष॒जम् । सर्व॑म् । नः॒ । अ॒स्तु॒ । भे॒ष॒जम् ॥ ३ ॥



## Viśvedevāḥ

**VI.56.1** O bounties of nature, let not the snake kill us, along with our offsprings and with our men. May it not open its closed mouth, may it not close its mouth when opened. Our homage be to the enlightened men (i.e., the physicians).

**VI.56.2** Our homage be to the asita or black (snake); homage to the tiraściraji or to the cross-lined; homage to the brown (babhru) constrictor; homage be to the svaja or self-born, and to the devajana or enlightened ones.

**VI.56.3** I beat your tooth with tooth together; your jaw with jaw together; your toungue with tongue together; and your mouth, O snake, with mouth together.

## Rudraḥ

**VI.57.1** This (water) indeed is a remedy. This is the Rudra's (terrible lord's) remedy, with which he calls off the one-shafted arrow with a hundred tips.

**VI.57.2** Bathe the parts all around with water. Bathe the inner parts with water. The water is a powerful remedy. May you make us happy with it, so that we may live.

## Bheṣajam : Remedy

**VI.57.3** May ours be the weal and the happiness. And may we not suffer from any disease. May the foreign matter (causing disease) calm down. May all the things be remedy to us; may everything be remedy to us.

(५८) [illegible] सूक्तम्

(१–३) [illegible] ऋषिः। बृहस्पतिर्मन्त्रोक्ता वा देवता। (१) [illegible] जगती, (२) द्वितीयस्या प्रस्तारपङ्क्तिः, (३) तृतीयपादानुष्टुप् छन्दांसि।

यशसं मेन्द्रो मघवान्कृणोतु यशसं द्यावापृथिवी उभे इमे।
यशसं मा देवः सविता कृणोतु प्रियो दातुर्दक्षिणाया इह स्याम् ॥१॥
यथेन्द्रो द्यावापृथिव्योर्यशस्वान्यथाप ओषधीषु यशस्वतीः।
एवा विश्वेषु देवेषु वयं सर्वेषु यशसः स्याम ॥२॥
यशा इन्द्रो यशा अग्निर्यशाः सोमो अजायत।
यशा विश्वस्य भूतस्याहमस्मि यशस्तमः ॥३॥

यशसम्। मा। इन्द्रः। मघऽवान्। कृणोतु। यशसम्। द्यावापृथिवी इति। उभे इति। इमे इति।
यशसम्। मा। देवः। सविता। कृणोतु। प्रियः। दातुः। दक्षिणायाः। इह। स्याम्॥ १ ॥
यथा। इन्द्रः। द्यावापृथिव्योः। यशस्वान्। यथा। आपः। ओषधीषु। यशस्वतीः।
एव। विश्वेषु। देवेषु। वयम्। सर्वेषु। यशसः। स्याम॥ २ ॥
यशाः। इन्द्रः। यशाः। अग्निः। यशाः। सोमः। अजायत।
यशाः। विश्वस्य। भूतस्य। अहम्। अस्मि। यशःऽतमः॥ ३ ॥

(५९) [illegible] सूक्तम्

(१–३) [illegible] ऋषिः। [illegible] मन्त्रोक्ता वा देवता। अनुष्टुप् छन्दः।

अनडुद्भ्यस्त्वं प्रथमं धेनुभ्यस्त्वमरुन्धति।
अधेनवे वयसे शर्म यच्छ चतुष्पदे ॥१॥
शर्म यच्छत्वोषधिः सह देवीररुन्धती।
करत्पयस्वन्तं गोष्ठमयक्ष्मॉं उत पूरुषान् ॥२॥
विश्वरूपां सुभगामच्छावदामि जीवलाम्।
सा नो रुद्रस्यास्तां हेतिं दूरं नयतु गोभ्यः ॥३॥

अनडुत्ऽभ्यः। त्वम्। प्रथमम्। धेनुऽभ्यः। त्वम्। अरुन्धति।
अधेनवे। वयसे। शर्म। यच्छ। चतुःऽपदे॥ १ ॥
शर्म। यच्छतु। ओषधिः। सह। देवीः। अरुन्धती।
करत्। पयस्वन्तम्। गोऽस्थम्। अयक्ष्मान्। उत। पुरुषान्॥ २ ॥
विश्वऽरूपाम्। सुऽभगाम्। अच्छऽआवदामि। जीवलाम्।
सा। नः। रुद्रस्य। अस्ताम्। हेतिम्। दूरम्। नयतु। गोभ्यः॥ ३ ॥



## As in the Verses

**VI.58.1** May the bounteous resplendent Lord make me glorious; glorious both the heaven and earth. May the impeller Lord make me glorious. May I become the pleasing donor of gifts.

**VI.58.2** Just as the resplendent one is glorious on the terrestrial and celestial firmaments; as the waters (have become famous among the remedies), are glorious in the plants; so among all the enlightened ones and among all men, may we become glorious.

**VI.58.3** The resplendent Lord is glorious; glorious is the adorable one, the blissful one is glorious. May I become the most glorious with the glory of all the beings.

## Arundhati etc.

**VI.59.1** O unobstructing herb (Arundhati, sahadevī or silāci), may you grant comfort first of all to our bullocks (anadvān) and milch-cows (dhenu) and also to non-milch quadrupeds less than five years old (vayase).

**VI.59.2** May the unobstructing herb sahadevi grant comfort. May it make our cow-stall rich in milk and our men free from consumption.

**VI.59.3** I praise the life-giving (herb), having all sorts of forms and bringing good fortune. May it turn the missile hurled by the terrible punisher (rudra) away far from our cattle.

(६०) षष्टितमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्याथर्वा ऋषिः। अर्यमा देवता। अनुष्टुप् छन्दः।

अयमा यात्यर्यमा पुरस्ताद्विषितस्तुपः।
अस्या इच्छन्नग्रुवै पतिमुत जायामजानये ॥१॥
अश्रमदियमर्यमन्नन्यासां समनं यती।
अङ्गो न्व१र्यमन्नस्या अन्याः समनमायति ॥२॥
धाता दाधार पृथिवीं धाता द्यामुत सूर्यम्।
धातास्या अग्रुवै पतिं दधातु प्रतिकाम्य१म् ॥३॥

अयम्। आ। याति। अर्यमा। पुरस्तात्। विसितऽस्तुपः।
अस्यै। इच्छन्। अग्रुवै। पतिम्। उत। जायाम्। अजानये ॥ १ ॥
अश्रमत्। इयम्। अर्यमन्। अन्यासाम्। समनम्। यती।
अङ्गो इति। नु। अर्यमन्। अस्याः। अन्याः। समनम्। आऽअयति ॥ २ ॥
धाता। दाधार। पृथिवीम्। धाता। द्याम्। उत। सूर्यम्।
धाता। अस्यै। अग्रुवै। पतिम्। दधातु। प्रतिऽकाम्य१म् ॥ ३ ॥

(६१) एकषष्टितमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्याथर्वा ऋषिः। रुद्रो देवता। (१) प्रथमर्चस्त्रिष्टुप्, (२-३) द्वितीयातृतीययोश्च भुरिक्त्रिष्टुप् छन्दसी।

मह्यमापो मधुमदेरयन्तां मह्यं सूरो अभरज्ज्योतिषे कम्।
मह्यं देवा उत विश्वे तपोजा मह्यं देवः सविता व्यचो धात् ॥१॥
अहं विवेच पृथिवीमुत द्यामहमृतूँरजनयं सप्त साकम्।
अहं सत्यमनृतं यद्वदाम्यहं दैवीं परि वाचं विशश्च ॥२॥
अहं जजान पृथिवीमुत द्यामहमृतूँरजनयं सप्त सिन्धून्।
अहं सत्यमनृतं यद्वदामि यो अग्नीषोमावजुषे सखाया ॥३॥

मह्यम्। आपः। मधुऽमत्। आ। ईरयन्ताम्। मह्यम्। सूरः। अभरत्। ज्योतिषे। कम्।
मह्यम्। देवाः। उत। विश्वे। तपःऽजाः। मह्यम्। देवः। सविता। व्यचः। धात् ॥१॥
अहम्। विवेच। पृथिवीम्। उत। द्याम्। अहम्। ऋतून्। अजनयम्। सप्त। साकम्।
अहम्। सत्यम्। अनृतम्। यत्। वदामि। अहम्। दैवीम्। परि। वाचम्। विशः। च ॥
अहम्। जजान। पृथिवीम्। उत। द्याम्। अहम्। ऋतून्। अजनयम्। सप्त। सिन्धून्।
अहम्। सत्यम्। अनृतम्। यत्। वदामि। यः। अग्नीषोमौ। अजुषे। सखाया ॥ ३ ॥



## Aryaman

**VI.60.1** Here comes in front the match-maker (aryaman) having white hair, seeking a husband for this maiden and also a wife for wifeless man.

**VI.60.2** O match-maker, this maiden has got tired going to wedding-gatherings of other girls. Now, O dear match-maker, let other girls come to the wedding ceremony of this maiden.

**VI.60.3** The sustainer Lord (dhātā) upholds the earth, the sustainer Lord upholds the sky and also the sun. May the sustainer Lord grant to this maid, a husband such as she desires (according to her wish).

## Rudraḥ

**VI.61.1** May the waters, full of sweetness, flow for me; may the sun bring pleasant light to illumine (to enlighten) me; may all the enlightened ones, (born of) practising austerities, and also the divine impeller Lord, grant me what is desirable for me.

**VI.61.2** I have set the earth and the sky apart. I have created seven seasons together. What is untrue, I speak truly. I have brought the divine speech to people all around.

**VI.61.3** I have created the earth, as well as, the sky. I have created the seasons and the rivers seven. What is untrue, I speak truly. I take pleasure in the friendship of the Lord adorable (Agni) and blissful (Soma).

(६२) द्विषष्टितमं सूक्तम्

(१-३) एतस्यास्य सूक्तस्याथर्वा ऋषिः । रुद्रो मन्त्रोक्ता वा देवता । त्रिष्टुप् छन्दः ॥

वैश्वानरो रश्मिभिर्नः पुनातु वातः प्राणेनेषिरो नभोभिः ।
द्यावापृथिवी पयसा पयस्वती ऋतावरी यज्ञिये नः पुनीताम् ॥१॥
वैश्वानरीं सूनृतामा रभध्वं यस्या आशास्तन्वो वीतपृष्ठाः ।
तया गृणन्तः सधमादेषु वयं स्याम पतयो रयीणाम् ॥२॥
वैश्वानरीं वर्चस आ रभध्वं शुद्धा भवन्तः शुचयः पावकाः ।
इहेडया सधमादं मदन्तो ज्योक्पश्येम सूर्यमुच्चरन्तम् ॥३॥

वैश्वानरः । रश्मिऽभिः । नः । पुनातु । वातः । प्राणेन । इषिरः । नभःऽभिः । द्यावापृथिवी इति । पयसा । पयस्वती इति । ऋतवरी इत्यृतऽवरी । यज्ञिये इति । नः । पुनीताम् ॥ १ ॥
वैश्वानरीम् । सूनृताम् । आ । रभध्वम् । यस्याः । आशाः । तन्वः । वीतऽपृष्ठाः ।
तया । गृणन्तः । सधऽमादेषु । वयम् । स्याम । पतयः । रयीणाम् ॥ २ ॥
वैश्वानरीम् । वर्चसे । आ । रभध्वम् । शुद्धाः । भवन्तः । शुचयः । पावकाः ।
इह । इडया । सधऽमादम् । मदन्तः । ज्योक् । पश्येम । सूर्यम् । उत्ऽचरन्तम् ॥ ३ ॥

(६३) त्रिषष्टितमं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्य द्रुह्वण ऋषिः । (१-३) प्रथमादितृचस्य निर्ऋतिर्यमो मृत्युश्च, (४) चतुर्थ्या ऋचः अग्निर्देवताः । (१) प्रथमाया अतिजगती, (२-३) द्वितीयातृतीययोर्जगतीगर्भा जगती, (४) चतुर्थ्याश्चानुष्टुप् छन्दांसि ॥

यत्ते देवी निर्ऋतिराबबन्ध दाम ग्रीवास्वविमोक्यं यत् ।
तत्ते वि ष्याम्यायुषे वर्चसे बलायादोमदमन्नमद्धि प्रसूतः ॥१॥
नमोऽस्तु ते निर्ऋते तिग्मतेजोऽयस्मयान्वि चृता बन्धपाशान् ।
यमो मह्यं पुनरित्त्वां ददाति तस्मै यमाय नमो अस्तु मृत्यवे ॥२॥

यत् । ते । देवी । निःऽऋतिः । आऽबबन्ध । दाम । ग्रीवासु । अविऽमोक्यम् । यत् ।
तत् । ते । वि । स्यामि । आयुषे । वर्चसे । बलाय । अदोमदम् । अन्नम् । अद्धि । प्रऽसूतः ॥ १ ॥
नमः । अस्तु । ते । निःऽऋते । तिग्मऽतेजः । अयस्मयान् । वि । चृत । बन्धऽपाशान् ।
यमः । मह्यम् । पुनः । इत् । त्वाम् । ददाति । तस्मै । यमाय । नमः । अस्तु । मृत्यवे ॥ २ ॥



## Vaisvānara etc. (Cosmic man)

**VI.62.1** May the fire, benefactor of all men, purify us with his rays; may the wind quickened with clouds (purify us) with breath. May the heaven and earth, rich in water, righteous and engaged in selfless actions, purify us.

**VI.62.2** Start, O men, reciting the speech of praises of Vaiśvānara (the benefactor of all men); the body of that speech are these wide-backed regions. Reciting that speech at our happy gatherings, may we become the masters of riches.

**VI.62.3** Start, O men, reciting the speech of praises of Vaiśvānara (the benefactor of all men) for splendour, becoming cleansed, pure and purifying. Here enjoying the happy gathering with good food, may we see the rising (uccarantam) sun for long.

## Nir-rtih - Perdition

**VI.63.1** What collar the divine perdition (distress, Nir-ṛti) has fastened round your neck and which can not be loosened, that I unfasten for your long life, lustre and strength (as if) born anew, eat the food that does no harm.

## Yamaḥ

**VI.63.2** Obeissance be to you, O perdition (distress) of sharpened fury. May you loosen the binding iron-fetters. The controller (death) verily gives them to you, O men, now give them back to me. Our homage be to that controller, the death.

अयस्मये द्रुपदे बेधिष इहाभिहितो मृत्युभिर्ये सहस्रम् ।
यमेन त्वं पितृभिः संविदान उत्तमं नाकमधि रोहयेमम् ॥३॥

संसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ ।
इडस्पदे समिध्यसे स नो वसून्या भर ॥४॥

अयस्मये । द्रुऽपदे । बेधिषे । इह । अभिऽहितः । मृत्युऽभिः । ये । सहस्रम् । यमेन ।
त्वम् । पितृऽभिः । सम्ऽविदानः । उत्ऽतमम् । नाकम् । अधि । रोहय । इमम् ॥ ३ ॥
सम्ऽसम् । इत् । युवसे । वृषन् । अग्ने । विश्वानि । अर्यः । आ ।
इडः । पदे । सम् । इध्यसे । सः । नः । वसूनि । आ । भर ॥ ४ ॥

( ६४ ) चतुःषष्टितमं सूक्तम्
(१-३) तृचस्यास्य सूक्तस्याथर्वा ऋषिः । विश्वे देवा मनश्च देवताः । (१, ३) प्रथमातृतीययो-रनुष्टुप्, (२) द्वितीयायाश्च त्रिष्टुप् छन्दसी ॥

सं जानीध्वं सं पृच्यध्वं सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे संजानाना उपासते ॥१॥
समानो मन्त्रः समितिः समानी समानं व्रतं सह चित्तमेषाम् ।
समानेन वो हविषा जुहोमि समानं चेतो अभिसंविशध्वम् ॥२॥
समानी व आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वः सुसहासति ॥३॥

सम् । जानीध्वम् । सम् । पृच्यध्वम् । सम् । वः । मनांसि । जानताम् ।
देवाः । भागम् । यथा । पूर्वे । सम्ऽजानानाः । उपऽआसते ॥ १ ॥
समानः । मन्त्रः । सम्ऽइतिः । समानी । समानम् । व्रतम् । सह । चित्तम् । एषाम् ।
समानेन । वः । हविषा । जुहोमि । समानम् । चेतः । अभिऽसंविशध्वम् ॥ २ ॥
समानी । वः । आऽकूतिः । समाना । हृदयानि । वः ।
समानम् । अस्तु । वः । मनः । यथा । वः । सुऽसह । असति ॥ ३ ॥



### Mṛtyuḥ - Death

**VI.63.3** When you bind a man to the iron-peg, then in this world, he stays surrounded with deaths, which are thousands. (O distress divine), may you, in accord with the controller and the elders, raise this man to the highest sorrowless world.

### Agniḥ

**VI.63.4** O vigorous fire-divine, you are the masters. You unite all with each other. You are kindled at the place of sacrifice (recitation). May you bring riches to us. (Also Ṛg. X.191.1)

### Sām - manasyam : Complete Understanding

**VI.64.1** Know each other. Be united together. Understand the thoughts of each other among yourselves, just as the enlightened ones of olden times waited for their shares with complete understanding.(Cf. Ṛg. X.191.2)

**VI.64.2** Let your consultations be common, your assemblies common, you duties common and thoughts of all of you be common and concurrent. I offer to you oblations (supplies) jointly. Strive for a common objective (purpose). (Cf. Ṛg. X.191.3)

**VI.64.3** Let your determination be one and the same (common). Let your hearts be in harmony with each other. Let you minds be one and united, so that all goes well with you. (Cf. Ṛg. X.191.4)

(६५) पञ्चषष्टितमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्याथर्वा ऋषिः । चन्द्र इन्द्रः पराशरो वा देवता ।
(१) प्रथमर्चः पथ्यापङ्क्तिः, (२-३) द्वितीयातृतीययोश्चानुष्टुप् छन्दसी ॥

अव मन्युरवायताव बाहू मनोयुजा ।
पराशर त्वं तेषां पराञ्चं शुष्ममर्दयाधा नो रयिमा कृधि ॥१॥
निर्हस्तेभ्यो नैर्हस्तं यं देवाः शरुमस्यथ । वृश्चामि शत्रूणां बाहूननेन हविषाहम् ॥२॥
इन्द्रश्चकार प्रथमं नैर्हस्तमसुरेभ्यः । जयन्तु सत्वानो मम स्थिरेणेन्द्रेण मेदिना ॥३॥

अव । मन्युः । अव । आऽयता । अव । बाहू इति । मनःऽयुजा । पराऽशर ।
त्वम् । तेषाम् । पराञ्चम् । शुष्मम् । अर्दय । अध । नः । रयिम् । आ । कृधि ॥ १ ॥
निःऽहस्तेभ्यः । नैःऽहस्तम् । यम् । देवाः । शरुम् । अस्यथ ।
वृश्चामि । शत्रूणाम् । बाहून् । अनेन । हविषा । अहम् ॥ २ ॥
इन्द्रः । चकार । प्रथमम् । नैःऽहस्तम् । असुरेभ्यः ।
जयन्तु । सत्वानः । मम । स्थिरेण । इन्द्रेण । मेदिना ॥ ३ ॥

(६६) षट्षष्टितमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्याथर्वा ऋषिः । चन्द्र इन्द्रो वा देवता । (१) प्रथमर्चस्त्रिष्टुप्, (२-३) द्वितीयातृतीययोश्चानुष्टुप् छन्दसी ॥

निर्हस्तः शत्रुरभिदासन्नस्तु ये सेनाभिर्युधमायन्त्यस्मान् ।
समर्पयेन्द्र महता वधेन द्रात्वेषामघहारो विविद्धः ॥१॥
आतन्वाना आयच्छन्तोऽस्यन्तो ये च धावथ ।
निर्हस्ताः शत्रवः स्थनेन्द्रो वोऽद्य पराशरीत् ॥२॥
निर्हस्ताः सन्तु शत्रवोऽङ्गैषां म्लापयामसि ।
अथैषामिन्द्र वेदांसि शतशो वि भजामहै ॥३॥

निःऽहस्तः । शत्रुः । अभिऽदासन् । अस्तु । ये । सेनाभिः । युधम् । आऽयन्ति । अस्मान् ।
सम् । अर्पय । इन्द्र । महता । वधेन । द्रातु । एषाम् । अघऽहारः । विऽविद्धः ॥ १ ॥
आऽतन्वानाः । आऽयच्छन्तः । अस्यन्तः । ये । च । धावथ ।
निःऽहस्ताः । शत्रवः । स्थन । इन्द्रः । वः । अद्य । परा । अशरीत् ॥ २ ॥
निःऽहस्ताः । सन्तु । शत्रवः । अङ्गा । एषाम् । म्लापयामसि ।
अथ । एषाम् । इन्द्र । वेदांसि । शतऽशः । वि । भजामहै ॥ ३ ॥



### Parāśarahi Indraḥ

**VI.65.1** Let your fury relax, let your stretched (bows) relax; let your two arms, in unison with mind, relax. May you, O destroyer, shake their strength away. Then may you grant riches to us.

**VI.65.2** O enlightened ones, the disarming weapon, which you hurl on armless enemies, with that, I hew the arms of foes, by this offering.

**VI.65.3** First of all, the resplendent Lord disarms the evil-doers. May my warriors win with the help of ever-unwavering adorable Lord.

### Indraḥ

**VI.66.1** May the enemy assailing us be disarmed; also those, who with armies come to fight against us. O resplendent one, strike them with (your) mighty weapon. May their plunderer (chief) run short through (with arrows).

**VI.66.2** O enemies, who rush on stringing (your bows), stretching and hurling, lay down your arms. The resplendent one has over-shot you today.

**VI.66.3** May the enemies be disarmed. We make their limbs languid. Then, O resplendent one, let us divide their hundred-fold riches among ourselves.

(६७) सप्तषष्टितमं सूक्तम्

(१-३) अस्य सूक्तस्याथर्वा ऋषिः । मन्त्रोक्ता इन्द्रो वा देवता । अनुष्टुप् छन्दः ॥

परि वर्त्मानि सर्वत इन्द्रः पूषा च सस्रतुः ।
मुह्यन्त्वद्यामूः सेना अमित्राणां परस्तराम् ॥१॥
मूढा अमित्राश्चरताशीर्षाण इवाहयः । तेषां वो अग्निमूढानामिन्द्रो हन्तु वरंवरम् ॥२॥
ऐषु नह्य वृषाजिनं हरिणस्या भियं कृधि । पराङमित्र एषत्वर्वाची गौरुपेषतु ॥३॥

परि । वर्त्मानि । सर्वतः । इन्द्रः । पूषा । च । सस्रतुः ।
मुह्यन्तु । अद्य । अमूः । सेनाः । अमित्राणाम् । परःऽतराम् ॥ १ ॥
मूढाः । अमित्राः । चरत । अशीर्षाणःऽइव । अहयः ।
तेषाम् । वः । अग्निऽमूढानाम् । इन्द्रः । हन्तु । वरम्ऽवरम् ॥ २ ॥
आ । एषु । नह्य । वृषा । अजिनम् । हरिणस्य । भियम् । कृधि ।
पराङ् । अमित्रः । एषतु । अर्वाची । गौः । उप । एषतु ॥ ३ ॥

(६८) अष्टषष्टितमं सूक्तम्

(१-३) अस्य सूक्तस्याथर्वा ऋषिः । मन्त्रोक्ता देवताः । (१) प्रथमर्चश्चतुष्पदा पुरोविराडतिशाक्वरगर्भा जगती, (२) द्वितीयाया अनुष्टुप्, (३) तृतीयायाश्चातिजगतीगर्भा त्रिष्टुप् छन्दांसि ॥

आयमगन्त्सविता क्षुरेणोष्णेन वाय उदकेनेहि ।
आदित्या रुद्रा वसव उन्दन्तु सचेतसः सोमस्य राज्ञो वपत प्रचेतसः ॥१॥
अदितिः श्मश्रु वपत्वाप उन्दन्तु वर्चसा ।
चिकित्सतु प्रजापतिर्दीर्घायुत्वाय चक्षसे ॥२॥
येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् ।
तेन ब्रह्माणो वपतेदमस्य गोमानश्ववानयमस्तु प्रजावान् ॥३॥

आ । अयम् । अगन् । सविता । क्षुरेण । उष्णेन । वायो इति । उदकेन । आ । इहि ।
आदित्याः । रुद्राः । वसवः । उन्दन्तु । सऽचेतसः । सोमस्य । राज्ञः । वपत । प्रऽचेतसः ॥
अदितिः । श्मश्रु । वपतु । आपः । उन्दन्तु । वर्चसा ।
चिकित्सतु । प्रजाऽपतिः । दीर्घायुऽत्वाय । चक्षसे ॥ २ ॥
येन । अवपत् । सविता । क्षुरेण । सोमस्य । राज्ञः । वरुणस्य । विद्वान् । तेन । ब्रह्माणः ।
वपत । इदम् । अस्य । गोऽमान् । अश्वऽवान् । अयम् । अस्तु । प्रजाऽवान् ॥ ३ ॥



## Indraḥ

**VI.67.1** Let the resplendent one and the nourisher move along all the paths. Let those hosts of enemies be confounded and flee far away today.

**VI.67.2** May you, O enemies, move about bewildered like snakes with severed heads. Of you, confounded by the adorable one (the army chief), let the resplendent one (the king) slay each and every prominent chief.

**VI.67.3** With your might, put deer's hide on them (the enemies). Create terror among them all around. Let the enemy flee away; let his cows come here to us.

## Savitṛ and others : As in the verses

**VI.68.1** This sun (Savitā) has come with the razor. O wind, come with warm water. May the ādityas (suns of twelve months), the rudras (vital breaths), and the vasus (dwelling regions) moisten the hair with one mind. Shave the hair of the blissful king with utmost care.

**VI.68.2** Let the indivisible earth shave the beard. Let the waters moisten him with lustre. May the Lord of creatures treat scratches with medicines, so that this king may have a long life with good vision.

**VI.68.3** With which razor the knowledgeable sun shaved the blissful king and the venerable king, O learned priests, with the same razor shave the hair and beard of this man. May he be rich in cows, horses and progeny (children).

( ६९ ) एकोनसप्ततितमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्याथर्वा ऋषिः । बृहस्पतिरश्विनौ वा देवते । अनुष्टुप् छन्दः ॥

गिरावरगराटेषु हिरण्ये गोषु यद्यशः । सुरायां सिच्यमानायां कीलाले मधु तन्मयि ॥१॥
अश्विना सारघेण मा मधुनाङ्क्तं शुभस्पती । यथा भर्गस्वतीं वाचमावदानि जनाँ अनु ॥२॥
मयि वर्चो अथो यशोथो यज्ञस्य यत्पयः । तन्मयि प्रजापतिर्दिवि द्यामिव दृंहतु ॥३॥

गिरौ । अरगराटेषु । हिरण्ये । गोषु । यत् । यशः । सुरायाम् ।
सिच्यमानायाम् । कीलाले । मधु । तत् । मयि ॥ १ ॥
अश्विना । सारघेण । मा । मधुना । अङ्क्तम् । शुभः । पती इति ।
यथा । भर्गस्वतीम् । वाचम् । आऽवदानि । जनान् । अनु ॥ २ ॥
मयि । वर्चः । अथो इति । यशः । अथो इति । यज्ञस्य । यत् । पयः ।
तत् । मयि । प्रजाऽपतिः । दिवि । द्याम्ऽइव । दृंहतु ॥ ३ ॥

( ७० ) सप्ततितमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य काङ्कायन ऋषिः । अघ्न्या देवता । जगती छन्दः ॥

यथा मांसं यथा सुरा यथाक्षा अधिदेवने ।
यथा पुंसो वृषण्यत स्त्रियां निहन्यते मनः ।
एवा ते अघ्न्ये मनोधि वत्से नि हन्यताम् ॥१॥
यथा हस्ती हस्तिन्याः पदेन पदमुद्युजे ।
यथा पुंसो वृषण्यत स्त्रियां निहन्यते मनः ।
एवा ते अघ्न्ये मनोधि वत्से नि हन्यताम् ॥२॥
यथा प्रधिर्यथोपधिर्यथा नभ्यं प्रधावधि ।
यथा पुंसो वृषण्यत स्त्रियां निहन्यते मनः ।
एवा ते अघ्न्ये मनोधि वत्से नि हन्यताम् ॥३॥

यथा । मांसम् । यथा । सुरा । यथा । अक्षाः । अधिऽदेवने । यथा । पुंसः । वृषण्यतः ।
स्त्रियाम् । निऽहन्यते । मनः । एव । ते । अघ्न्ये । मनः । अधि । वत्से । नि । हन्यताम् ॥
यथा । हस्ती । हस्तिन्याः । पदेन । पदम् । उत्ऽयुजे । यथा । पुंसः । वृषण्यतः ।
स्त्रियाम् । निऽहन्यते । मनः । एव । ते । अघ्न्ये । मनः । अधि । वत्से । नि । हन्यताम् ॥ २ ॥
यथा । प्रऽधिः । यथा । उपऽधिः । यथा । नभ्यम् । प्रऽधौ । अधि । यथा । पुंसः ।
वृषण्यतः । स्त्रियाम् । निऽहन्यते । मनः । एव । ते । अघ्न्ये । मनः । अधि । वत्से ।
नि । हन्यताम् ॥ ३ ॥



## Bṛhaspatiḥ : Pair of Aśvins

**VI.69.1** What glory is there in the hill, in valleys, in gold, and in cows, what sweetness is there in the strong drink being poured out, and in the sweet drink, may that come unto me.

**VI.69.2** O twin healers, lords of weal, may you anoint me with delicious bee-honey, so that I may utter glorious words to men.

**VI.69.3** What lustre, glory and the essence of sacrifice is there, may the Lord of creatures establish that in me firmly, as light is in the sky.

## Aghnyā : Inviolable Cow

**VI.70.1** As meat is attached with wine; as dice are attached with a gambling place; as the mind of a passionate man is attached to a woman; so O inviolable one (cow), let your mind be attached to your calf (vatsa).

**VI.70.2** As a male elephant passes his foot against the foot of a cow-elephant; as the mind of a passionate man is attached to a woman; so, O inviolable one, let your mind be attached to your calf.

**VI.70.3** As the felly is attached to the rim, as the rain is attached to the spokes; as the spokes are attached to the nave, as the mind of a passionate man is attached to a woman; so, O inviolable one, let you mind be attached to your calf.

(७१) एकसप्ततितमं सूक्तम्

(१-३) त्र्यृचस्यास्य सूक्तस्य ब्रह्मा ऋषिः। (१-२) प्रथमाद्वितीययोरग्निः; (३) तृतीयायाश्च विश्वे देवा देवताः। (१-२) प्रथमाद्वितीययोर्जगती, (३) तृतीयायाश्च त्रिष्टुप् छन्दसी॥

यदन्नमद्मि बहुधा विरूपं हिरण्यमश्वमुत गामजामविम्।
यदेव किं च प्रतिजग्रहाहमग्निष्टद्धोता सुहुतं कृणोतु॥१॥
यन्मा हुतमहुतमाजगाम दत्तं पितृभिरनुमतं मनुष्यैः।
यस्मान्मे मन उदिव रारजीत्यग्निष्टद्धोता सुहुतं कृणोतु॥२॥
यदन्नमद्म्यनृतेन देवा दास्यन्नदास्यन्नुत संगृणामि।
वैश्वानरस्य महतो महिम्ना शिवं मह्यं मधुमदस्त्वन्नम्॥३॥

यत्। अन्नम्। अद्मि। बहुऽधा। विऽरूपम्। हिरण्यम्। अश्वम्। उत। गाम्। अजाम्। अविम्। यत्। एव। किम्। च। प्रतिऽजग्रह। अहम्। अग्निः। तत्। होता। सुऽहुतम्। कृणोतु॥ १॥
यत्। मा। हुतम्। अहुतम्। आऽजगाम। दत्तम्। पितृऽभिः। अनुऽमतम्। मनुष्यैः। यस्मात्। मे। मनः। उत्ऽइव। रारजीति। अग्निः। तत्। होता। सुऽहुतम्। कृणोतु॥
यत्। अन्नम्। अद्मि। अनृतेन। देवाः। दास्यन्। अदास्यन्। उत। सम्ऽगृणामि। वैश्वानरस्य। महतः। महिम्ना। शिवम्। मह्यम्। मधुऽमत्। अस्तु। अन्नम्॥ ३॥

(७२) द्विसप्ततितमं सूक्तम्

(१-३) त्र्यृचस्यास्य सूक्तस्याथर्वाङ्गिरा ऋषिः। शेपोऽर्को देवता। (१) प्रथमर्चो जगती, (२) द्वितीयाया अनुष्टुप्, (३) तृतीयायाश्च भुरिगनुष्टुप् छन्दांसि॥

यथासितः प्रथयते वशाँ अनु वपूंषि कृण्वन्नसुरस्य मायया।
एवा ते शेपः सहसायमर्कोऽङ्गेनाङ्गं संसमकं कृणोतु॥१॥
यथा पसस्तायादरं वातेन स्थूलभं कृतम्।
यावत्परस्वतः पसस्तावत्ते वर्धतां पसः॥२॥
यावदङ्गीनं पारस्वतं हास्तिनं गार्दभं च यत्।
यावदश्वस्य वाजिनस्तावत्ते वर्धतां पसः॥३॥

यथा। असितः। प्रथयते। वशान्। अनु। वपूंषि। कृण्वन्। असुरस्य। मायया। एव। ते। शेपः। सहसा। अयम्। अर्कः। अङ्गेन। अङ्गम्। सम्ऽसमकम्। कृणोतु॥
यथा। पसः। तायादरम्। वातेन। स्थूलभम्। कृतम्। यावत्। परस्वतः। पसः। तावत्। ते। वर्धताम्। पसः॥ २॥
यावत्ऽअङ्गीनम्। पारस्वतम्। हास्तिनम्। गार्दभम्। च। यत्। यावत्। अश्वस्य। वाजिनः। तावत्। ते। वर्धताम्। पसः॥ ३॥



## Agniḥ

**VI.71.1** The food of various types, which I often eat, and the gold, horse, or cow, goat and sheep, whatever I have taken, may the adorable Lord, the offerer, make all that properly obtained.

**VI.71.2** Whatever given or not given, gifted by the elders and approved by men, has come into my possession, and with which my heart is highly excited, may the Lord, the offerer, make all that properly obtained.

## Viśvedevāḥ

**VI.71.3** O enlightened ones, what food I eat falsely, and whatever I accumulate, whether giving or not giving in charities, with the greatness of the mighty Vaisvānara (benefactor of all), may that sweet food be propitious to me.

## Śepaḥ - Arkaḥ (herb)

**VI.72.1** As a black snake (cobra) expands himself at will, making various forms by the tricks of the snake-charmer (asura), even so may this arka herb make your male organ corresponding to the female organ by its strength.

**VI.72.2** Just as the male organ of tāyādara (an animal) becomes enlarged due to wind, so may your male organ become as large as that of the wild ass (parasvān).

**VI.72.3** As large is the male organ of the wild ass, of the elephant, of the ass and as large as that of a hot horse, so large may your male organ become, fitting well the female organ.

(७३) त्रिसप्ततितमं सूक्तम्

(१–३) कृत्स्नस्य सूक्तस्याथर्वा ऋषिः। मन्त्रोक्ता देवताः। (१, ३) प्रथमातृतीययोर्भुरिक्त्रिष्टुप्, (२) द्वितीयायाश्च त्रिष्टुप् छन्दसी॥

एह यातु वरुणः सोमो अग्निर्बृहस्पतिर्वसुभिरेह यातु।
अस्य श्रियमुपसंयात सर्वे उग्रस्य चेत्तुः संमनसः सजाताः॥१॥
यो वः शुष्मो हृदयेष्वन्तराकूतिर्या वो मनसि प्रविष्टा।
तान्त्सीवयामि हविषा घृतेन मयि सजाता रमतिर्वो अस्तु॥२॥
इहैव स्त माप याताध्यस्मत्पूषा परस्तादपथं वः कृणोतु।
वास्तोष्पतिरनु वो जोहवीतु मयि सजाता रमतिर्वो अस्तु॥३॥

आ। इह। यातु। वरुणः। सोमः। अग्निः। बृहस्पतिः। वसुऽभिः। आ। इह। यातु।
अस्य। श्रियम्। उपऽसंयात। सर्वे। उग्रस्य। चेत्तुः। समऽमनसः। सऽजाताः॥ १॥
यः। वः। शुष्मः। हृदयेषु। अन्तः। आऽकूतिः। या। वः। मनसि। प्रऽविष्टा।
तान्। सीवयामि। हविषा। घृतेन। मयि। सऽजाताः। रमतिः। वः। अस्तु॥ २॥
इह। एव। स्त। मा। अप। यात। अधि। अस्मत्। पूषा। परस्तात्। अपथम्। वः। कृणोतु।
वास्तोः। पतिः। अनु। वः। जोहवीतु। मयि। सऽजाताः। रमतिः। वः। अस्तु॥ ३॥

(७४) चतुःसप्ततितमं सूक्तम्

(१–३) कृत्स्नस्य सूक्तस्याथर्वा ऋषिः। (१–२) प्रथमाद्वितीययोर्मन्त्रोक्ताः, (३) तृतीयायाश्च त्रिनामा देवताः। (१–२) प्रथमाद्वितीययोरनुष्टुप्, (३) तृतीयायाश्च त्रिष्टुप् छन्दसी॥

सं वः पृच्यन्तां तन्वः सं मनांसि समु व्रता।
सं वोऽयं ब्रह्मणस्पतिर्भगः सं वो अजीगमत्॥१॥
संज्ञपनं वो मनसोऽथो संज्ञपनं हृदः।
अथो भगस्य यच्छ्रान्तं तेन संज्ञपयामि वः॥२॥
यथादित्या वसुभिः संबभूवुर्मरुद्भिरुग्रा अहृणीयमानाः।
एवा त्रिणामन्नहृणीयमान इमाञ्जनान्त्संमनसस्कृधीह॥३॥

सम्। वः। पृच्यन्ताम्। तन्वः। सम्। मनांसि। सम्। ऊं इति। व्रता।
सम्। वः। अयम्। ब्रह्मणः। पतिः। भगः। सम्। वः। अजीगमत्॥१॥
सम्ऽज्ञपनम्। वः। मनसः। अथो इति। सम्ऽज्ञपनम्। हृदः।
अथो इति। भगस्य। यत्। श्रान्तम्। तेन। सम्ऽज्ञपयामि। वः॥ २॥
यथा। आदित्याः। वसुऽभिः। सम्ऽबभूवुः। मरुत्ऽभिः। उग्राः। अहृणीयमानाः।
एव। त्रिऽनामन्। अहृणीयमानः। इमान्। जनान्। सम्ऽमनसः। कृधि। इह॥ ३॥



## Varuṇa and others

**VI.73.1** May the venerable Lord come here; here the blissful Lord and the adorable Lord. May the Lord supreme come here with riches (vasus) O kinsmen, come all of you together, one-minded to the glory of this formidable and wise (leader).

**VI.73.2** The vehemence, which your hearts have harboured, and the determination, which has entered your minds, I annul with purified butter and provisions (offerings); O kinsmen, in me let your affection rest.

**VI.73.3** Do stay here. Do not go away from us. May the nourisher Lord make your way, which leads away from us, unfit for travel. May the master of house-hold recall you again and again. O kinsmen, in me let your affection rest.

## Brahmaṇaspatiḥ etc.

**VI.74.1** Let your bodies meet (unite) together, your minds and your actions (vows) be together. May this Lord of knowledge and the Lord of good fortune make you united.

**VI.74.2** Let there be a common understanding of your minds and common understanding of your hearts. And then, what is weariness of your good fortune, with that I make you understand each other.

**VI.74.3** Just as formidable and irrepressible ādityas (suns of twelve months) became united with the vasus (bestowers of wealth), so O irreprssible three-named Lord (fire), may you make these people here of one mind.

( ७५ ) पञ्चसप्ततितमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य कबन्ध ऋषिः । इन्द्रो देवता । (१-२) प्रथमाद्वितीययो-
र्ऋचोरनुष्टुप्, (३) तृतीयायाश्च षट्पदा जगती छन्दसी ॥

निरमुं नुद ओकसः सपत्नो यः पृतन्यति । नैर्बाध्ये॒न हविषेन्द्र एनं पराशरीत् ॥१॥
परमां तं परावतमिन्द्रो नुदतु वृत्रहा । यतो न पुनरायति शश्वतीभ्यः समाभ्यः ॥२॥
एतु तिस्रः परावत एतु पञ्च जनाँ अति ।
एतु तिस्रोऽति रोचना यतो न पुनरायति शश्वतीभ्यः समाभ्यो यावत्सूर्यो असद्दिवि ॥३॥

निः । अमुम् । नुद । ओकसः । सऽपत्नः । यः । पृतन्यति ।
नैःऽबाध्येन । हविषा । इन्द्रः । एनम् । परा । अशरीत् ॥ १ ॥
परमाम् । तम् । पराऽवतम् । इन्द्रः । नुदतु । वृत्रऽहा ।
यतः । न । पुनः । आऽअयति । शश्वतीभ्यः । समाभ्यः ॥ २ ॥
एतु । तिस्रः । पराऽवतः । एतु । पञ्च । जनान् । अति । एतु । तिस्रः । अति । रोचना ।
यतः । न । पुनः । आऽअयति । शश्वतीभ्यः । समाभ्यः । यावत् । सूर्यः । असत् । दिवि ॥ ३ ॥

( ७६ ) षट्सप्ततितमं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्य कबन्ध ऋषिः । सान्तपनाग्निर्देवता । (१-२, ४) प्रथमाद्वितीययो-
श्चतुर्थ्याश्चानुष्टुप्, (३) तृतीयायाश्च ककुम्मत्यनुष्टुप् छन्दसी ॥

य एनं परिषीदन्ति समादधति चक्षसे । संप्रेद्धो अग्निर्जिह्वाभिरुदेतु हृदयादधि ॥१॥
अग्नेः सांतपनस्याहमायुषे पदमा रभे । अद्धातिर्यस्य पश्यति धूममुद्यन्तमास्यतः ॥२॥

ये । एनम् । परिऽसीदन्ति । सम्ऽआदधति । चक्षसे ।
सम्ऽप्रेद्धः । अग्निः । जिह्वाभिः । उत् । एतु । हृदयात् । अधि ॥ १ ॥
अग्नेः । साम्ऽतपनस्य । अहम् । आयुषे । पदम् । आ । रभे ।
अद्धातिः । यस्य । पश्यति । धूमम् । उत्ऽयन्तम् । आस्यतः ॥ २ ॥



## Indraḥ

**VI.75.1** I throw that man out of house, the enemy, who assails us with a horde. May the resplendent army-chief put him to rout by stopping his supplies (haviṣā).

**VI.75.2** May the resplendent army-chief, slayer of the evil, drive him away to the remotest distance, from where he may not return ever in years to come.

**VI.75.3** Let him go beyond three remotest places; let him go beyond five races of minkind. Let him go beyond three shining lights, wherefrom he shall never come back, ever in years to come, as long as the sun is in the sky.

## Sāntapana - Agniḥ

**VI.76.1** Those who sit around him and who pile up fuel to see him - may the fire-divine blazing with flames, rise up from their heart.

**VI.76.2** For a long life, I move up to the abode of the burning (heating) fire-divine, from whose mouth the wise sage sees the smoke rising up.

यो अस्य समिधं वेद क्षत्रियेण समाहिताम् । नाभिह्वारे पदं नि दधाति स मृत्यवे ॥३॥
नैनं घ्नन्ति पर्यायिणो न सन्नाँ अव गच्छति । अग्नेर्यः क्षत्रियो विद्वान्नाम गृह्णात्यायुषे ॥४॥

यः । अस्य । सम्ऽइधम् । वेद । क्षत्रियेण । सम्ऽआहिताम् ।
न । अभिऽह्वारे । पदम् । नि । दधाति । सः । मृत्यवे ॥ ३ ॥
न । एनम् । घ्नन्ति । परिऽआयिनः । न । सन्नान् । अव । गच्छति ।
अग्नेः । यः । क्षत्रियः । विद्वान् । नाम । गृह्णाति । आयुषे ॥४॥

( ७७ ) सप्तसप्ततितमं सूक्तम्
(१-३) तृचस्यास्य सूक्तस्य कबन्ध ऋषिः । जातवेदा देवता । अनुष्टुप् छन्दः ॥

अस्थाद्द्यौरस्थात्पृथिव्यस्थाद्विश्वमिदं जगत् ।
आस्थाने पर्वता अस्थु स्थाम्न्यश्वाँ अतिष्ठिपम् ॥१॥
य उदानट् परायणं य उदानण्न्यायनम् ।
आवर्तनं निवर्तनं यो गोपा अपि तं हुवे ॥२॥
जातवेदो नि वर्तय शतं ते सन्त्वावृतः ।
सहस्रं त उपावृतस्ताभिर्नः पुनरा कृधि ॥३॥

अस्थात् । द्यौः । अस्थात् । पृथिवी । अस्थात् । विश्वम् । इदम् । जगत् ।
आऽस्थाने । पर्वताः । अस्थुः । स्थाम्नि । अश्वान् । अतिष्ठिपम् ॥ १ ॥
यः । उत्ऽआनट् । पराऽअयनम् । यः । उत्ऽआनट् । निऽअयनम् ।
आऽवर्तनम् । निऽवर्तनम् । यः । गोपाः । अपि । तम् । हुवे ॥ २ ॥
जातऽवेदः । नि । वर्तय । शतम् । ते । सन्तु । आऽवृतः ।
सहस्रम् । ते । उपऽआवृतः । ताभिः । नः । पुनः । आ । कृधि ॥ ३ ॥



**VI.76.3** Whoever knows the fuel of this (fire-divine) piled up by a heroic prince - he never seats his foot on a dangerous spot that may lead to death.

**VI.76.4** Those, who surround him, are unable to kill him; he does not go down before the lurking foes - he the heroic prince, who invokes the name of the fire-divine (adorable Lord) for the length of life.

## Jātavedāḥ

**VI.77.1** The sky stands firm (asthād); the earth stands firm; all this living world stands firm. The mountains stand firm in their proper place. I have made the swift-moving senses stand still in their stall.

**VI.77.2** Who controls the ascending up, who controls the descent (descending) downwards, who controls coming and going back - Him, the protector of earth, I invoke.

**VI.77.3** O knower of all, may you turn back. May there be a hundred of your coming and a thousand of your going back. With them, may you restore us to prosperity again.

( ७८ ) अष्टसप्ततितमं सूक्तम्

(१-३) ब्रह्मास्य सूक्तस्याथर्वा ऋषिः (१-२) प्रथमाद्वितीययोर्ऋचोश्चन्द्रमाः,
(३) तृतीयायाश्च त्वष्टा देवते । अनुष्टुप् छन्दः ॥

तेन भूतेन हविषायमा प्यायतां पुनः ।
जायां यामस्मा आवाक्षुस्तां रसेनाभि वर्धताम् ॥१॥
अभि वर्धतां पयसाभि राष्ट्रेण वर्धताम् ।
रय्या सहस्रवर्चसेमौ स्तामनुपक्षितौ ॥२॥
त्वष्टा जायामजनयत्त्वष्टास्यै त्वां पतिम् ।
त्वष्टा सहस्रमायूंषि दीर्घमायुः कृणोतु वाम् ॥३॥

तेन । भूतेन । हविषा । अयम् । आ । प्यायताम् । पुनः । जायाम् ।
याम् । अस्मै । आऽअवाक्षुः । ताम् । रसेन । अभि । वर्धताम् ॥ १ ॥
अभि । वर्धताम् । पयसा । अभि । राष्ट्रेण । वर्धताम् ।
रय्या । सहस्रऽवर्चसा । इमौ । स्ताम् । अनुपऽक्षितौ ॥ २ ॥
त्वष्टा । जायाम् । अजनयत् । त्वष्टा । अस्यै । त्वाम् । पतिम् ।
त्वष्टा । सहस्रम् । आयूंषि । दीर्घम् । आयुः । कृणोतु । वाम् ॥ ३ ॥

( ७९ ) एकोनाशीतितमं सूक्तम्

(१-३) अथर्वास्य सूक्तस्याथर्वा ऋषिः । संस्फानो देवता । (१-२) प्रथमद्वितीययोर्ऋचोर्गायत्री,
(३) तृतीयायाश्च त्रिपदा प्राजापत्या जगती छन्दसी ॥

अयं नो नभसस्पतिः संस्फानो अभि रक्षतु । असमातिं गृहेषु नः ॥१॥
त्वं नो नभसस्पत ऊर्जं गृहेषु धारय । आ पुष्टमेत्वा वसु ॥२॥
देव संस्फान सहस्रापोषस्येशिषे ।
तस्य नो रास्व तस्य नो धेहि तस्य ते भक्तिवांसः स्याम ॥३॥

अयम् । नः । नभसः । पतिः । सम्ऽस्फानः । अभि । रक्षतु । असमातिम् । गृहेषु । नः ।
त्वम् । नः । नभसः । पते । ऊर्जम् । गृहेषु । धारय ।
आ । पुष्टम् । एतु । आ । वसु ॥ २ ॥
देव । सम्ऽस्फान । सहस्रऽपोषस्य । ईशिषे । तस्य । नः । रास्व ।
तस्य । नः । धेहि । तस्य । ते । भक्तिऽवांसः । स्याम ॥ ३ ॥



## Candramāḥ

**VI.78.1** With that sumptuous sacrificial offering, may this man thrive again. May he enrich with happiness the bride, whom they have brought for him.

**VI.78.2** May he prosper with milk; may he prosper with princely power. May both these be exhaustless in riches with thousands of splendours.

## Tvaṣṭṛ

**VI.78.3** The universal architect has made the wife; the universal architect has created you to be her husband. May the universal architect bless you both with a long life, with a thousand lives.

## Saṁsphānam

**VI.79.1** May this lord of clouds, grower of food-grains, protect well the unmeasurable wealth in our homes.

**VI.79.2** O lord of clouds, may you maintain vigour (food-grains) in our homes. May the nourishment come to us and also the wealth.

**VI.79.3** O Lord, grower of food-grains, you are master of a thousand nourishments. May you grant those to us. May you keep those with us. May we become sharers of that wealth of yours.

(८०) अशीतितमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्याथर्वा ऋषिः। चन्द्रमा देवता। (१) प्रथमर्चो भुरिगनुष्टुप्, (२) द्वितीयाया अनुष्टुप्, (३) तृतीयायाश्च प्रस्तारपङ्क्तिश्छन्दांसि॥

अन्तरिक्षेण पतति विश्वा भूतावचाकशत्।
शुनो दिव्यस्य यन्महस्तेना ते हविषा विधेम ॥१॥
ये त्रयः कालकाञ्जा दिवि देवा इव श्रिताः।
तान्त्सर्वानह्व ऊतयेऽस्मा अरिष्टतातये ॥२॥
अप्सु ते जन्म दिवि ते सधस्थं समुद्रे अन्तर्महिमा ते पृथिव्याम्।
शुनो दिव्यस्य यन्महस्तेना ते हविषा विधेम ॥३॥

अन्तरिक्षेण। पतति। विश्वा। भूता। अवऽचाकशत्।
शुनः। दिव्यस्य। यत्। महः। तेन। ते। हविषा। विधेम ॥ १ ॥
ये। त्रयः। कालकाञ्जाः। दिवि। देवाःऽइव। श्रिताः।
तान्। सर्वान्। अह्वे। ऊतये। अस्मै। अरिष्टऽतातये ॥ २ ॥
अप्ऽसु। ते। जन्म। दिवि। ते। सधऽस्थम्। समुद्रे। अन्तः। महिमा। ते। पृथिव्याम्।
शुनः। दिव्यस्य। यत्। महः। तेन। ते। हविषा। विधेम ॥ ३ ॥

(८१) एकाशीतितमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्याथर्वा ऋषिः। यन्ता आदित्यो वा देवता। अनुष्टुप् छन्दः॥

यन्तासि यच्छसे हस्तावप रक्षांसि सेधसि।
प्रजां धनं च गृह्णानः परिहस्तो अभूदयम् ॥१॥
परिहस्त वि धारय योनिं गर्भाय धातवे।
मर्यादे पुत्रमा धेहि तं त्वमा गमयागमे ॥२॥
यं परिहस्तमबिभरदितिः पुत्रकाम्या।
त्वष्टा तमस्या आ बध्नाद्यथा पुत्रं जनादिति ॥३॥

यन्ता। असि। यच्छसे। हस्तौ। अप। रक्षांसि। सेधसि।
प्रऽजाम्। धनम्। च। गृह्णानः। परिऽहस्तः। अभूत्। अयम् ॥ १ ॥
परिऽहस्त। वि। धारय। योनिम्। गर्भाय। धातवे। मर्यादे।
पुत्रम्। आ। धेहि। तम्। त्वम्। आ। गमय। आऽगमे ॥ २ ॥
यम्। परिऽहस्तम्। अबिभः। अदितिः। पुत्रऽकाम्या। त्वष्टा।
तम्। अस्यै। आ। बध्नात्। यथा। पुत्रम्। जनात्। इति ॥ ३ ॥



## Candramāḥ : Moon

**VI.80.1** He flies through the midspace watching over all the beings. What greatness (mahas) of (the) heavenly hound is there, with that oblation we adore you.

**VI.80.2** The three kālakāñjas (time-indicators), that stay in the sky like the bounties of Nature, all of them we invoke for protection and secure this man from harm.

**VI.80.3** In waters is your birth, in the sky is your abode; in the ocean and on the earth is your majesty. What greatness or mahimā (mahas) of (the) your heavenly hound is there, with that oblation we adore you.

## Ādityaḥ : the son of Aditi

**VI.81.1** You are the controller. You keep both the hands under control. You drive injurious germs away. This bangle (parihasta) has been the receiver (bringer; harbinger) of progeny and wealth. (Parihasta= an ornament for wrist)

**VI.81.2** O bangle, keep the womb in proper condition for holding the embryo. O wife, may you conceive a desired son and bring him forth in due course.

**VI.81.3** The bangle, which was worn by aditi (the earth) with the desire of having a son - the universal architect has put the same on this woman, so that she may bear a son.

( ८२ ) द्व्यशीतितमं सूक्तम्

(१-३) अस्य सूक्तस्य भग ऋषिः । इन्द्रो देवता । अनुष्टुप् छन्दः ॥

आगच्छत आगतस्य नाम गृह्णाम्यायतः ।
इन्द्रस्य वृत्रघ्नो वन्वे वासवस्य शतक्रतोः ॥१॥
येन सूर्यां सावित्रीमश्विनोहतुः पथा ।
तेन मामब्रवीद्भगो जायामा वहतादिति ॥२॥
यस्तेऽङ्कुशो वसुदानो बृहन्निन्द्र हिरण्ययः ।
तेना जनीयते जायां मह्यं धेहि शचीपते ॥३॥

आऽगच्छतः । आऽगतस्य । नाम । गृह्णामि । आऽयतः ।
इन्द्रस्य । वृत्रऽघ्नः । वन्वे । वासवस्य । शतऽक्रतोः ॥ १ ॥
येन । सूर्याम् । सावित्रीम् । अश्विना । ऊहतुः । पथा ।
तेन । माम् । अब्रवीत् । भगः । जायाम् । आ । वहतात् । इति ॥ २ ॥
यः । ते । अङ्कुशः । वसुऽदानः । बृहन् । इन्द्र । हिरण्ययः ।
तेन । जनिऽयते । जायाम् । मह्यम् । धेहि । शचीऽपते ॥ ३ ॥

( ८३ ) त्र्यशीतितमं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्याङ्गिरा ऋषिः । मन्त्रोक्ता देवताः । (१-३) प्रथमादितृचस्यानुष्टुप्, (४) चतुर्थ्या ऋचश्चैकावसाना द्विपदा निचृदार्च्यनुष्टुप् छन्दसी ॥

अपचितः प्र पतत सुपर्णो वसतेरिव ।
सूर्यः कृणोतु भेषजं चन्द्रमा वोपोच्छतु ॥१॥
एन्येका श्येन्येका कृष्णैका रोहिणी द्वे ।
सर्वासामग्रभं नामावीरघ्नीरपेतन ॥२॥

अपऽचितः । प्र । पतत । सुऽपर्णः । वसतेःऽइव । सूर्यः । कृणोतु ।
भेषजम् । चन्द्रमाः । वः । अप । उच्छतु ॥ १ ॥
एनी । एका । श्येनी । एका । कृष्णा । एका । रोहिणी इति । द्वे इति । सर्वासाम् ।
अग्रभम् । नाम । अवीरऽघ्नीः । अप । इतन ॥ २ ॥



## Indraḥ

**VI.82.1** I call out the name of the resplendent one, the slayer of nescience, the lord of wealth, and performer of a hundred selfless deeds (śatakratu) - who is arriving, has come and is approaching near. I like him.

**VI.82.2** The Lord of good fortune has spoken to me; bring a wife by the same path, by which the twins divine have brought the maiden of marriageable age, the daughter of the impeller (house-holder).

**VI.82.3** O resplendent Lord, with your great golden hook, which is bestower of wealth, may you bestow a wife on me, who seek a wife, O master of good action (śacīpati).

## Sūrya etc. (the Sun)

**VI.83.1** O malignant tumour (eruptious) (apacit), may you fly away like an eagle from its nest. May the sun provide a remedy and the moon dislodge you.

**VI.83.2** One is spotted; one is white; one is black; and two are reddish. I have pronounced the names of all of you. May you go away, without injuring our heroes.

असूतिका रामायण्यपचित्प्र पतिष्यति ।
ग्लौरितः प्र पतिष्यति स गलुन्तो नशिष्यति ॥३॥
वीहि स्वामाहुतिं जुषाणो मनसा स्वाहा मनसा यदिदं जुहोमि ॥४॥

असूतिका । रामायणी । अपऽचित् । प्र । पतिष्यति ।
ग्लौः । इतः । प्र । पतिष्यति । सः । गलुन्तः । नशिष्यति ॥ ३ ॥
वीहि । स्वाम् । आऽहुतिम् । जुषाणः । मनसा । स्वाहा । मनसा । यत् । इदम् । जुहोमि ॥४॥

(८४) चतुरशीतितमं सूक्तम्

(१–४) चतुर्ऋचस्यास्य सूक्तस्याङ्गिरा ऋषिः । निर्ऋतिर्देवता । (१) प्रथमर्चो भुरिग्जगती, (२) द्वितीयायास्त्रिपदार्षी बृहती, (३) तृतीयाया जगती, (४) चतुर्थ्याश्च भुरिक्त्रिष्टुप् छन्दांसि ॥

यस्यास्त आसनि घोरे जुहोम्येषां बद्धानामवसर्जनाय कम् ।
भूमिरिति त्वाभिप्रमन्वते जना निर्ऋतिरिति त्वाहं परि वेद सर्वतः ॥१॥
भूते हविष्मती भवैष ते भागो यो अस्मासु ।
मुञ्चेमानमूनेनसः स्वाहा ॥२॥
एवो ष्व१स्मन्निर्ऋतेनेहा त्वमयस्मयान्वि चृता बन्धपाशान् ।
यमो मह्यं पुनरित्त्वां ददाति तस्मै यमाय नमो अस्तु मृत्यवे ॥३॥
अयस्मये द्रुपदे बेधिष इहाभिहितो मृत्युभिर्ये सहस्रम् ।
यमेन त्वं पितृभिः संविदान उत्तमं नाकमधि रोहयेमम् ॥४॥

यस्याः । ते । आसनि । घोरे । जुहोमि । एषाम् । बद्धानाम् । अवऽसर्जनाय । कम् । भूमिः ।
इति । त्वा । अभिऽप्रमन्वते । जनाः । निःऽऋतिः । इति । त्वा । अहम् । परि । वेद । सर्वतः ॥ १ ॥
भूते । हविष्मती । भव । एषः । ते । भागः । यः । अस्मासु ।
मुञ्च । इमान् । अमून् । एनसः । स्वाहा ॥ २ ॥
एवो इति । सु । अस्मत् । निःऽऋते । अनेहा । त्वम् । अयस्मयान् । वि । चृत । बन्धऽपाशान् ।
यमः । मह्यम् । पुनः । इत् । त्वाम् । ददाति । तस्मै । यमाय । नमः । अस्तु । मृत्यवे ॥ ३ ॥
अयस्मये । द्रुऽपदे । बेधिषे । इह । अभिऽहितः । मृत्युऽभिः । ये । सहस्रम् ।
यमेन । त्वम् । पितृऽभिः । सम्ऽविदानः । उत्ऽतमम् । नाकम् । अधि । रोहय । इमम् ॥४॥



**VI.83.3** The malignant tumour, rooted in the veins, will fly away without producing another. The sceptic one will fly away and that morbid one will also vanish.

**VI.83.4** O disease, may you flee away, heartily enjoying the oblation offered to you, which I heartily offer. Svāhā.

## Nir-ṛti (Perdition)

**VI.84.1** O you, in whose horrible mouth I sacrifice my happiness for the release of these bound ones - people consider you to be the earth but I know you thoroughly to be the distress (perdition) (Nir-ṛti).

**VI.84.2** O (distress) present everywhere, may you accept our oblations. This is your share, which is within us. May you release these as well as those from the (bonds of) sin.

**VI.84.3** O distress (perdition), not obstructing us, do loosen the iron-fetters (aṇkuśa), that bind us fast. The controller (death) verily gives, O man, back to me. Our homage be to that controller, the death. (Also Ṛg. VI.63.2)

**VI.84.4** May you bind a man to the iron-peg, then in this world, he stays surrounded with deaths, which are thosands, (O distress divine); may you, in accord with the controller and the elders, raise this man to the highest sorrowless worlds. (Also see Av. VI.63.3)

( ८५ ) पञ्चाशीतितमं सूक्तम्

(१-३) वृषत्वाख्य सूक्तस्याथर्वा ऋषिः । वनस्पतिर्देवता । अनुष्टुप् छन्दः ॥

वरणो वारयाता अयं देवो वनस्पतिः ।
यक्ष्मो यो अस्मिन्नाविष्टस्तमु देवा अवीवरन् ॥१॥
इन्द्रस्य वर्चसा वयं मित्रस्य वरुणस्य च ।
देवानां सर्वेषां वाचा यक्ष्मं ते वारयामहे ॥२॥
यथा वृत्र इमा आपस्तस्तम्भ विश्वधा यतीः ।
एवा ते अग्निना यक्ष्मं वैश्वानरेण वारये ॥३॥

वरणः । वारयातै । अयम् । देवः । वनस्पतिः ।
यक्ष्मः । यः । अस्मिन् । आऽविष्टः । तम् । ऊं इति । देवाः । अवीवरन् ॥ १ ॥
इन्द्रस्य । वर्चसा । वयम् । मित्रस्य । वरुणस्य । च ।
देवानाम् । सर्वेषाम् । वाचा । यक्ष्मम् । ते । वारयामहे ॥ २ ॥
यथा । वृत्रः । इमाः । आपः । तस्तम्भ । विश्वधा । यतीः ।
एव । ते । अग्निना । यक्ष्मम् । वैश्वानरेण । वारये ॥ ३ ॥

( ८६ ) षडशीतितमं सूक्तम्

(१-३) वृषत्वाख्य सूक्तस्याथर्वा ऋषिः । एकवृषो देवता । अनुष्टुप् छन्दः ॥

वृषेन्द्रस्य वृषा दिवो वृषा पृथिव्या अयम् ।
वृषा विश्वस्य भूतस्य त्वमेकवृषो भव ॥१॥
समुद्र ईशे स्रवतामग्निः पृथिव्या वशी ।
चन्द्रमा नक्षत्राणामीशे त्वमेकवृषो भव ॥२॥
सम्राडस्यसुराणां ककुन्मनुष्याणाम् ।
देवानामर्धभागसि त्वमेकवृषो भव ॥३॥

वृषा । इन्द्रस्य । वृषा । दिवः । वृषा । पृथिव्याः । अयम् ।
वृषा । विश्वस्य । भूतस्य । त्वम् । एकऽवृषः । भव ॥ १ ॥
समुद्रः । ईशे । स्रवताम् । अग्निः । पृथिव्याः । वशी ।
चन्द्रमाः । नक्षत्राणाम् । ईशे । त्वम् । एकऽवृषः । भव ॥ २ ॥
सम्ऽराट् । असि । असुराणाम् । ककुत् । मनुष्याणाम् ।
देवानाम् । अर्धऽभाक् । असि । त्वम् । एकऽवृषः । भव ॥ ३ ॥



## Vanaspatiḥ : A herb

**VI.85.1** This divine fast-tree Varana (Varuṇa; Createaeva .roxburghii) is a preventive remedy. May the enlightened ones cure the consumption that has entered this man.

**VI.85.2** By the command of the replendent Lord, of the friendly Lord, of the venerable Lord, and with the speech of all the enlightend ones, we ward off your wasting disease.

**VI.85.3** Just as the coverer (vṛtra) stopped and stilled these waters, nourisher of all, so with the fire, the benefactor of all men, I ward off your wasting disease.

## Eka - vṛṣaḥ

**VI.86.1** This man is the power (vṛṣā) of the resplendent Lord, the power of the heaven, the power of the earth, the power of all the beings. May you be the one and only powerful lord.

**VI.86.2** The ocean is the lord of the streams, the fire has the sway over land; the moon is lord of the stars. May you be the one and only powerful lord.

**VI.86.3** You are the sovereign of the life-enjoyers and apex of men; you are the part-sharer of the enlightened ones. May you be the one and only powerful lord.

(८७) सप्ताशीतितमं सूक्तम्

(१-३) ध्रुवस्यास्य सूक्तस्याथर्वा ऋषिः । ध्रुवो देवता । अनुष्टुप् छन्दः ॥

आ त्वाहार्षमन्तरभूर्ध्रुवस्तिष्ठाविचाचलत् ।
विशस्त्वा सर्वा वाञ्छन्तु मा त्वद्राष्ट्रमधि भ्रशत् ॥१॥
इहैवैधि माप च्योष्ठाः पर्वत इवाविचाचलत् ।
इन्द्रेहैव ध्रुवस्तिष्ठेह राष्ट्रमु धारय ॥२॥
इन्द्र एतमदीधरद्ध्रुवं ध्रुवेण हविषा ।
तस्मै सोमो अधि ब्रवदयं च ब्रह्मणस्पतिः ॥३॥

आ । त्वा । अहार्षम् । अन्तः । अभूः । ध्रुवः । तिष्ठ । अविऽचाचलत् ।
विशः । त्वा । सर्वाः । वाञ्छन्तु । मा । त्वत् । राष्ट्रम् । अधि । भ्रशत् ॥ १ ॥
इह । एव । एधि । मा । अप । च्योष्ठाः । पर्वतःऽइव । अविऽचाचलत् ।
इन्द्रःऽइव । इह । ध्रुवः । तिष्ठ । इह । राष्ट्रम् । ऊं इति । धारय ॥ २ ॥
इन्द्रः । एतम् । अदीधरत् । ध्रुवम् । ध्रुवेण । हविषा ।
तस्मै । सोमः । अधि । ब्रवत् । अयम् । च । ब्रह्मणः । पतिः ॥ ३ ॥

(८८) अष्टाशीतितमं सूक्तम्

(१-३) ध्रुवस्यास्य सूक्तस्याथर्वा ऋषिः । ध्रुवो देवता । (१-२) प्रथमाद्वितीययोर्ऋचोरनुष्टुप्, (३) तृतीयायाश्च त्रिष्टुप् छन्दसी ॥

ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत् ।
ध्रुवासः पर्वता इमे ध्रुवो राजा विशामयम् ॥१॥
ध्रुवं ते राजा वरुणो ध्रुवं देवो बृहस्पतिः ।
ध्रुवं त इन्द्रश्चाग्निश्च राष्ट्रं धारयतां ध्रुवम् ॥२॥
ध्रुवोऽच्युतः प्र मृणीहि शत्रूञ्छत्रूयतोऽधरान्पादयस्व ।
सर्वा दिशः संमनसः सध्रीचीर्ध्रुवाय ते समितिः कल्पतामिह ॥३॥

ध्रुवा । द्यौः । ध्रुवा । पृथिवी । ध्रुवम् । विश्वम् । इदम् । जगत् ।
ध्रुवासः । पर्वताः । इमे । ध्रुवः । राजा । विशाम् । अयम् ॥ १ ॥
ध्रुवम् । ते । राजा । वरुणः । ध्रुवम् । देवः । बृहस्पतिः ।
ध्रुवम् । ते । इन्द्रः । च । अग्निः । च । राष्ट्रम् । धारयताम् । ध्रुवम् ॥ २ ॥
ध्रुवः । अच्युतः । प्र । मृणीहि । शत्रून् । शत्रुऽयतः । अधरान् । पादयस्व । सर्वाः ।
दिशः । सम्ऽमनसः । सध्रीचीः । ध्रुवाय । ते । सम्ऽइतिः । कल्पताम् । इ ॥ ३ ॥



## Dhruvaḥ

**VI.87.1** O king, I have brought you here. Now you have entered inside. May you remain here firm and unremovable. May all the subjects be like you. May Your kingship never fail. (Also Yv. XII.11)

**VI.87.2** Remain ever here. Do not be removed. Stay here seadfast just like the resplendent Lord and sustain here the kingdom.

**VI.87.3** The resplendent Lord sustains him steady with unfailing offerings (supplies). May the blissful Lord and the Lord supreme bless and favour him.

## Dhruvaḥ : Firm

**VI.88.1** The sky is firm (dhruva); the earth is firm; and all this living world is firm. These mountains are firm and firm is this king of the people.

**VI.88.2** May the sovereign venerable Lord be firm for you and the victorious (devaḥ) Lord supreme (Bṛhaspati) for you be firm. May the resplendent Lord and the adorable Lord keep your kingdom firm.

**VI.88.3** Firm and unshaken slay your enemies. Put them down who behave like enemies. May all the regions be like-minded and accordant to you. May the war-council (assembly) enable you to remain firmly here.

( ८९ ) एकोननवतितमं सूक्तम्

(१–३) [illegible] सूक्तस्याथर्वा ऋषिः । मन्त्रोक्ता देवता । अनुष्टुप् छन्दः ॥

इदं यत्प्रेण्यः शिरो दत्तं सोमेन वृष्ण्यम् ।
ततः परि प्रजातेन हार्दिं ते शोचयामसि ॥१॥
शोचयामसि ते हार्दिं शोचयामसि ते मनः ।
वातं धूम इव सध्र्यङ् मामेवान्वेतु ते मनः ॥२॥
मह्यं त्वा मित्रावरुणौ मह्यं देवी सरस्वती ।
मह्यं त्वा मध्यं भूम्या उभावन्तौ समस्यताम् ॥३॥

इदम् । यत् । प्रेण्यः । शिरः । दत्तम् । सोमेन । वृष्ण्यम् ।
ततः । परि । प्रऽजातेन । हार्दिम् । ते । शोचयामसि ॥ १ ॥
शोचयामसि । ते । हार्दिम् । शोचयामसि । ते । मनः ।
वातम् । धूमःऽइव । सध्र्यङ् । माम् । एव । अनु । एतु । ते । मनः ॥२॥
मह्यम् । त्वा । मित्रावरुणौ । मह्यम् । देवी । सरस्वती ।
मह्यम् । त्वा । मध्यम् । भूम्याः । उभौ । अन्तौ । सम् । अस्यताम् ॥ ३ ॥

( ९० ) नवतितमं सूक्तम्

(१–३) [illegible] सूक्तस्याथर्वा ऋषिः । रुद्रो देवता । (१–२) प्रथमद्वितीययोर्मन्त्रयोरनुष्टुप्, (३) तृतीयमन्त्रस्यार्षी भुरिगुष्णिक् छन्दसी ॥

यां ते रुद्र इषुमास्यदङ्गेभ्यो हृदयाय च ।
इदं तामद्य त्वद्वयं विषूचीं वि वृहामसि ॥१॥
यास्ते शतं धमनयोऽङ्गान्यनु विष्ठिताः ।
तासां ते सर्वासां वयं निर्विषाणि ह्वयामसि ॥२॥
नमस्ते रुद्रास्यते नमः प्रतिहितायै ।
नमो विसृज्यमानायै नमो निपतितायै ॥३॥

याम् । ते । रुद्रः । इषुम् । आस्यत् । अङ्गेभ्यः । हृदयाय । च ।
इदम् । ताम् । अद्य । त्वत् । वयम् । विषूचीम् । वि । वृहामसि ॥ १ ॥
याः । ते । शतम् । धमनयः । अङ्गानि । अनु । विऽस्थिताः ।
तासाम् । ते । सर्वासाम् । वयम् । निः । विषाणि । ह्वयामसि ॥ २ ॥
नमः । ते । रुद्र । अस्यते । नमः । प्रतिऽहितायै ।
नमः । विऽसृज्यमानायै । नमः । निऽपतितायै ॥ ३ ॥



## As in the verses

**VI.89.1** This is the invigorating head of the winner of love, which Soma, the medicinal herb, has bestowed with the vigour born out of it, we incite desire in your heart.

**VI.89.2** We incite your heart, we incite your mind. May your mind follow me straight, as smoke follows the wind.

**VI.89.3** May the Lord friendly and venerable give you to me; may the divine speech may give you to me. May the middle and both the ends of the earth unite you with me.

## Rudraḥ

**VI.90.1** The arrow, which the terrible punisher has shot at your limbs and at your heart, that we now draw backward from you.

**VI.90.2** The hundreds arteries, that lie within your limbs, from all of them we draw the poison out.

**VI.90.3** O terrible punisher, homage be to you when shooting; homage be to the arrow aimed at; homage be to the arrow leaving the bow-string; homage be to the arrow hitting (the target).

(९१) एकनवतितमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य शन्तातिः ऋषिः । (१-२) प्रथमाद्वितीययोर्ऋचोर्यक्ष्मनाशनम्, (३) तृतीयायाश्च आपो देवताः । अनुष्टुप् छन्दः ॥

इमं यवमष्टायोगैः षड्योगेभिरचर्कृषुः ।
तेना ते तन्वो३ रपोपाचीनमप व्यये ॥१॥
न्य१ग्वातो वाति न्यक्तपति सूर्यः ।
नीचीनमघ्न्या दुहे न्यग्भवतु ते रपः ॥२॥
आप इद्वा उ भेषजीरापो अमीवचातनीः ।
आपो विश्वस्य भेषजीस्तास्ते कृण्वन्तु भेषजम् ॥३॥

इमम् । यवम् । अष्टाऽयोगैः । षट्ऽयोगेभिः । अचर्कृषुः ।
तेन । ते । तन्वः । रपः । अपाचीनम् । अप । व्यये ॥ १ ॥
न्यक् । वातः । वाति । न्यक् । तपति । सूर्यः ।
नीचीनम् । अघ्न्या । दुहे । न्यक् । भवतु । ते । रपः ॥ २ ॥
आपः । इत् । वै । ऊं इति । भेषजीः । आपः । अमीवऽचातनीः ।
आपः । विश्वस्य । भेषजीः । ताः । ते । कृण्वन्तु । भेषजम् ॥ ३ ॥

(९२) द्विनवतितमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्याथर्वा ऋषिः । वाजी देवता । (१) प्रथमर्चो जगती, (२-३) द्वितीयातृतीययोश्च त्रिष्टुप् छन्दसी ॥

वातरंहा भव वाजिन्युज्यमान इन्द्रस्य याहि प्रसवे मनोजवाः ।
युञ्जन्तु त्वा मरुतो विश्ववेदस आ ते त्वष्टा पत्सु जवं दधातु ॥१॥
जवस्ते अर्वन्निहितो गुहा यः श्येने वात उत योऽचरत्परीत्तः ।
तेन त्वं वाजिन्बलवान्बलेनाजिं जय समने पारयिष्णुः ॥२॥
तनूष्टे वाजिन्तन्वं१ नयन्ती वाममस्मभ्यं धावतु शर्म तुभ्यम् ।
अह्रुतो महो धरुणाय देवो दिवीव ज्योतिः स्वमा मिमीयात् ॥३॥

वातऽरंहाः । भव । वाजिन् । युज्यमानः । इन्द्रस्य । याहि । प्रऽसवे । मनःऽजवाः ।
युञ्जन्तु । त्वा । मरुतः । विश्वऽवेदसः । आ । ते । त्वष्टा । पत्ऽसु । जवम् । दधातु ॥१॥
जवः । ते । अर्वन् । निऽहितः । गुहा । यः । श्येने । वाते । उत । यः । अचरत् ।
परीत्तः । तेन । त्वम् । वाजिन् । बलऽवान् । बलेन । आजिम् । जय । समने । पारयिष्णुः ॥
तनूः । ते । वाजिन् । तन्वम् । नयन्ती । वामम् । अस्मभ्यम् । धावतु । शर्म । तुभ्यम् ।
अह्रुतः । महः । धरुणाय । देवः । दिविऽइव । ज्योतिः । स्वम् । आ । मिमीयात् ॥



## Eradication of Yakṣma or disease

**VI.91.1** This barley, they have treated with a mixture of eight remedies (aṣṭā yogaiḥ), with a mixture of six remedies (ṣaḍayogebhiḥ). With this, I expel the disease from your body downwards.

**VI.91.2** The wind blows downwards; downwards shines the sun; downwards the cow is milked; may your disease be expelled downwards.

### Āpaḥ : Waters

**VI.91.3** The waters certainly have the remedial properties; the waters are dispeller of disease. The waters cure all maladies; may they be the remedy for you.

### Vājin (steed)

**VI.92.1** O vājin, the steed, may you be as swift as wind, after having been harnessed (yuj), please go in Indra's impulse (prasava), with quickness of the mind. May the maruts (cloud-bearing winds) harness you. May the Supreme Architect, Tvaṣṭṛ, provide speed to your feet. (Also Yv. IX.8)

**VI.92.2** O courser, speed has been put in your feet in secrecy, comparable to the speed of a hawk or of the wind. May you become strong with the strength; may your entire race be strong; may you rescue us during our struggles and strifes. (Also Yv. IX.9)

**VI.92.3** O speedy courser, may your body, carrying the body (of the rider), being wealth for us and comfort for you. May the great simple-hearted Lord, make His light shine for the sustenance (of the world), like the light of the sky. (Also Ṛg. X.56.1)

( ९३ ) त्रिनवतितमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य शन्तातिर्ऋषिः । (१-२) प्रथमाद्वितीययोर्ऋचोर्यमः, (३) तृतीयायाश्च विश्वे देवा देवताः । त्रिष्टुप् छन्दः ॥

यमो मृत्युरघमारो निर्ऋथो बभ्रुः शर्वोऽस्ता नीलशिखण्डः ।
देवजनाः सेनयोत्तस्थिवांसस्ते अस्माकं परि वृञ्जन्तु वीरान् ॥१॥
मनसा होमैर्हरसा घृतेन शर्वायास्त्र उत राज्ञे भवाय ।
नमस्येभ्यो नम एभ्यः कृणोम्यन्यत्रास्मदघविषा नयन्तु ॥२॥
त्रायध्वं नो अघविषाभ्यो वधाद्विश्वे देवा मरुतो विश्ववेदसः ।
अग्नीषोमा वरुणः पूतदक्षा वातापर्जन्ययोः सुमतौ स्याम ॥३॥

यमः । मृत्युः । अघऽमारः । निःऽऋथः । बभ्रुः । शर्वः । अस्ता । नीलऽशिखण्डः ।
देवऽजनाः । सेनया । उत्तस्थिऽवांसः । ते । अस्माकम् । परि । वृञ्जन्तु । वीरान् ॥१॥
मनसा । होमैः । हरसा । घृतेन । शर्वाय । अस्त्रे । उत । राज्ञे । भवाय । नमस्येभ्यः ।
नमः । एभ्यः । कृणोमि । अन्यत्र । अस्मत् । अघऽविषाः । नयन्तु ॥ २ ॥
त्रायध्वम् । नः । अघऽविषाभ्यः । वधात् । विश्वे । देवाः । मरुतः । विश्वऽवेदसः ।
अग्नीषोमा । वरुणः । पूतऽदक्षाः । वातापर्जन्ययोः । सुऽमतौ । स्याम ॥ ३ ॥

( ९४ ) चतुर्नवतितमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्याथर्वाङ्गिरा ऋषिः । सरस्वती देवता । (१, ३) प्रथमातृतीययोर्ऋचोरनुष्टुप्, (२) द्वितीयायाश्च विराड्जगती छन्दसी ॥

सं वो मनांसि सं व्रता समाकूतीर्नमामसि ।
अमी ये विव्रता स्थन तान्वः सं नमयामसि ॥१॥
अहं गृभ्णामि मनसा मनांसि मम चित्तमनु चित्तेभिरेत ।
मम वशेषु हृदयानि वः कृणोमि मम यातमनुवर्त्मान एत ॥२॥
ओते मे द्यावापृथिवी ओता देवी सरस्वती ।
ओतौ म इन्द्रश्चाग्निश्चर्ध्यास्मेदं सरस्वति ॥३॥

सम् । वः । मनांसि । सम् । व्रता । सम् । आऽकूतिः । नमामसि ।
अमी इति । ये । विऽव्रताः । स्थन । तान् । वः । सम् । नमयामसि ॥ १ ॥
अहम् । गृभ्णामि । मनसा । मनांसि । मम । चित्तम् । अनु । चित्तेभिः । आ । इत ।
मम । वशेषु । हृदयानि । वः । कृणोमि । मम । यातम् । अनुऽवर्त्मानः । आ । इत ॥ २ ॥
ओते इत्याऽउते । मे । द्यावापृथिवी इति । आऽउता । देवी । सरस्वती ।
आऽउतौ । मे । इन्द्रः । च । अग्निः । च । ऋध्यास्म । इदम् । सरस्वति ॥ ३ ॥



## Yama and Others (see verses)

**VI.93.1** The controller, the death, the slayer of sinners, the tormentor, the tawny-coloured, the tearer, the shooter, the blue-crested, and all the enlightened people, having risen up with invading army - may all of them leave our heroes unscathed.

**VI.93.2** To the tearer and the shooter, and to their great promising (bhava) king, worthy of homage. I pay my homage to them all with thought, with offerings and with purified butter. May they turn the poisonous sinners (agha-viṣā) away from us.

**VI.93.3** All the enlightened ones, brave soldiers knowing all, the Lord adorable and venerable, and the venerable Lord skilled in purifying, may they protect us from poisonous sinners and from murder (vadhād). May we be blessed with favour of the wind and the cloud.

## Sarasvatī

**VI.94.1** We mould together your minds, together your courses and designs. So far you have been of conflicting courses (vivratā), we make you bend them in harmony.

**VI.94.2** I hold your minds with mine; come after my intent; I put your heats in my control. Please come behind me following my foot-prints, the bracks of my movement.

**VI.94.3** Heaven and earth have worked in (otau) for me. The divine Sarasvati has worked in for me. Both Indra and Agni pervade through and through in me. O goddess of enlightenment, may we attain all success here. (Also cf.Av. V.23.1).

(९५) वनस्पतिर्दैवतं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य भृग्वङ्गिरा ऋषिः । वनस्पतिर्देवता । अनुष्टुप् छन्दः ॥

अश्वत्थो देवसदनस्तृतीयस्यामितो दिवि । तत्रामृतस्य चक्षणं देवाः कुष्ठमवन्वत ॥१॥
हिरण्ययी नौरचरद्धिरण्यबन्धना दिवि । तत्रामृतस्य पुष्पं देवाः कुष्ठमवन्वत ॥२॥
गर्भो असि ओषधीनां गर्भो हिमवतामुत । गर्भो विश्वस्य भूतस्येमं मे अगदं कृधि ॥३॥

अश्वत्थः । देवऽसदनः । तृतीयस्याम् । इतः । दिवि ।
तत्र । अमृतस्य । चक्षणम् । देवाः । कुष्ठम् । अवन्वत ॥ १ ॥
हिरण्ययी । नौः । अचरत् । हिरण्यऽबन्धना । दिवि ।
तत्र । अमृतस्य । पुष्पम् । देवाः । कुष्ठम् । अवन्वत ॥ २ ॥
गर्भः । असि । ओषधीनाम् । गर्भः । हिमऽवताम् । उत । गर्भः ।
विश्वस्य । भूतस्य । इमम् । मे । अगदम् । कृधि ॥ ३ ॥

(९६) वनस्पतिर्दैवतं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य भृग्वङ्गिरा ऋषिः । (१-२) प्रथमाद्वितीययोर्ऋचोर्वनस्पतिः, (३) तृतीयायाश्च सोमो देवते । (१-२) प्रथमाद्वितीययोरनुष्टुप्, (३) तृतीयायाश्च त्रिपदा विराड्गायत्री छन्दसी ॥

या ओषधयः सोमराज्ञीर्बह्वीः शतविचक्षणाः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ॥१॥
मुञ्चन्तु मा शपथ्या३दथो वरुण्यादुत ।
अथो यमस्य पड्वीशाद्विश्वस्माद्देवकिल्बिषात् ॥२॥
यच्चक्षुषा मनसा यच्च वाचोपारिम जाग्रतो यत्स्वपन्तः ।
सोमस्तानि स्वधया नः पुनातु ॥३॥

याः । ओषधयः । सोमऽराज्ञीः । बह्वीः । शतऽविचक्षणाः ।
बृहस्पतिऽप्रसूताः । ताः । नः । मुञ्चन्तु । अंहसः ॥ १ ॥
मुञ्चन्तु । मा । शपथ्यात् । अथो इति । वरुण्यात् । उत ।
अथो इति । यमस्य । पड्वीशात् । विश्वस्मात् । देवऽकिल्बिषात् ॥ २ ॥
यत् । चक्षुषा । मनसा । यत् । च । वाचा । उपऽआरिम । जाग्रतः । यत् । स्वपन्तः ।
सोमः । तानि । स्वधया । नः । पुनातु ॥ ३ ॥



## Vanaspati : Kuṣṭha herb

**VI.95.1** The Aśvattha, the seat of gods in the third heaven from here (devasadana, tṛtīya), there the gods gain a victory over Kuṣṭha or leprosy; the victory is a sight of immortality. (Also see Av. V.4.3)

**VI.95.2** A golden ship (hiraṇya mayī), of golden tackle (hiraṇya - bandhanā) roamed about in sky. There gods achieved victory on the Kuṣṭha (leprosy) - a flower of immortality (amṛtasya puṣpam)

**VI.95.3** You are the womb of herbs, O kuṣṭha, a child of the snowy mountains, the youngest of all existence. May you be gracious enough to make this man free from disease for me. (cf.Av. V.25.7)

## Vanaspatiḥ (herb)

**VI.96.1** The herbs which are numerous are of a hundred appearances and among whom the Chief is Soma. May those, impelled (prescribed) by the Lord supreme, free us from the malady.

**VI.96.2** May those (herbs) free me from the malady caused by angry words, and also from what is caused by maladjustment of water (varuṇyāt); then from the fetters of the controller (death) and also from all the sins committed against the bounties of Nature.

## Soma

**VI.96.3** Whether awake or asleep, whatever defect we have acquired through vision, mind or speech, may the blissful Lord (Soma plant) purify that with His power of sustenance.

(९७) सप्तनवतितमं सूक्तम्

(१-३) एतस्यास्य सूक्तस्याथर्वा ऋषिः। (१, ३) प्रथमातृतीययोर्मन्त्रयोर्देवाः, (२) द्वितीयायाश्च मित्रावरुणौ देवता। (१) प्रथमायास्त्रिष्टुप्, (२) द्वितीयाया जगती, (३) तृतीयायाश्च भुरिक्त्रिष्टुप् छन्दांसि॥

अभिभूर्यज्ञो अभिभूरग्निरभिभूः सोमो अभिभूरिन्द्रः।
अभ्य१हं विश्वाः पृतना यथासान्येवा विधेमाग्निहोत्रा इदं हविः॥१॥
स्वधास्तु मित्रावरुणा विपश्चिता प्रजावत्क्षत्रं मधुनेह पिन्वतम्।
बाधेथां दूरं निर्ऋतिं पराचैः कृतं चिदेनः प्र मुमुक्तमस्मत्॥२॥
इमं वीरमनु हर्षध्वमुग्रमिन्द्रं सखायो अनु सं रभध्वम्।
ग्रामजितं गोजितं वज्रबाहुं जयन्तमज्म प्रमृणन्तमोजसा॥३॥

अभिऽभूः। यज्ञः। अभिऽभूः। अग्निः। अभिऽभूः। सोमः। अभिऽभूः। इन्द्रः। अभि। अहम्।
विश्वाः। पृतनाः। यथा। असानि। एव। विधेम। अग्निऽहोत्राः। इदम्। हविः॥ १॥

स्वधा। अस्तु। मित्रावरुणा। विपःऽचिता। प्रजाऽवत्। क्षत्रम्। मधुना। इह। पिन्वतम्।
बाधेथाम्। दूरम्। निःऽऋतिम्। पराचैः। कृतम्। चित्। एनः। प्र। मुमुक्तम्। अस्मत्॥ २॥

इमम्। वीरम्। अनु। हर्षध्वम्। उग्रम्। इन्द्रम्। सखायः। अनु। सम्। रभध्वम्।
ग्रामऽजितम्। गोऽजितम्। वज्रऽबाहुम्। जयन्तम्। अज्म। प्रऽमृणन्तम्। ओजसा॥३॥

(९८) अष्टनवतितमं सूक्तम्

(१-२) एतस्यास्य सूक्तस्याथर्वा ऋषिः। इन्द्रो देवता। (१, ३) प्रथमातृतीययोर्मन्त्रयोस्त्रिष्टुप्, (२) द्वितीयायाश्च बृहतीगर्भास्तारपङ्क्तिश्छन्दसी॥

इन्द्रो जयाति न परा जयाता अधिराजो राजसु राजयातै।
चर्कृत्य ईड्यो वन्द्यश्चोपसद्यो नमस्यो᳡ भवेह॥१॥
त्वमिन्द्राधिराजः श्रवस्युस्त्वं भूरभिभूतिर्जनानाम्।
त्वं दैवीर्विश इमा वि राजायुष्मत्क्षत्रमजरं ते अस्तु॥२॥

इन्द्रः। जयाति। न। परा। जयातै। अधिऽराजः। राजऽसु। राजयातै।
चर्कृत्यः। ईड्यः। वन्द्यः। च। उपऽसद्यः। नमस्य᳡ः। भव। इह॥ १॥

त्वम्। इन्द्र। अधिऽराजः। श्रवस्युः। त्वम्। भूः। अभिऽभूतिः। जनानाम्।
त्वम्। दैवीः। विशः। इमाः। वि। राज। आयुष्मत्। क्षत्रम्। अजरम्। ते। अस्तु॥२॥



### Devāḥ

**VI.97.1** The sacrifice is the conqueror; the adorable king is the conqueror; the Soma (the blissful herb) is the conqueror; the resplendent army Chief is the conqueror. We, the invokers of the adorable Lord, offer this oblation, so that I may conquer all the invading hordes.

### Mitra - Varuṇa Pair

**VI.97.2** O Lord friendly and venerable. O wise, may there be sustenance for us. May you pour on this man princely power with sweetness and with progeny. Drive the distress (perdition) far and far away. May you also free us from the sin (that we might have ever) committed.

### Devāḥ

**VI.97.3** Raise a shout of joy, O friends, following this mighty hero. Mobilize yourselves behind this resplendent one, the conqueror of villages, the conqueror of cows, wielder of the adamantine weapon, victorious and the destroyer of enemy's force by his vehemence.

### Indraḥ

**VI.98.1** The resplendent one wins; he is never defeated; he shines as the overlord among kings. May you, O destroyer of enemy, be worthy of praise, homage, approach, and reverence here.

**VI.98.2** O resplendent king, may you become the glorious overlord of kings; may you become winner of people. May you rule over these godly people. May your princely power be long-lasting and never decaying.

प्राच्या दिशस्त्वमिन्द्रासि राजोतोदीच्या दिशो वृत्रहञ्छत्रुहोऽसि ।
यत्र यन्ति स्रोत्यास्तज्जितं ते दक्षिणतो वृषभ एषि हव्यः ॥३॥

प्राच्याः । दिशः । त्वम् । इन्द्र । असि । राजा । उत । उदीच्याः । दिशः । वृत्रऽहन् । शत्रुऽहः । असि । यत्र । यन्ति । स्रोत्याः । तत् । जितम् । ते । दक्षिणतः । वृषभः । एषि । हव्यः ॥ ३ ॥

( ९९ ) नवनवतितमं सूक्तम्

(१–३) तृचस्यास्य सूक्तस्याथर्वा ऋषिः । (१–२) प्रथमाद्वितीययोर्ऋचोरिन्द्रः, (३) तृतीयायाश्चेन्द्रः सोमः सविता च देवताः । (१–२) प्रथमाद्वितीययोरनुष्टुप्, (३) तृतीयायाश्च भुरिग्बृहती छन्दसी ॥

अभि त्वेन्द्र वरिमतः पुरा त्वांहूरणाद्धुवे ।
ह्वयाम्युग्रं चेत्तारं पुरुणामानमेकजम् ॥१॥
यो अद्य सेन्यो वधो जिघांसन्न उदीरते ।
इन्द्रस्य तत्र बाहू समन्तं परि दद्मः ॥२॥
परि दद्म इन्द्रस्य बाहू समन्तं त्रातुस्त्रायतां नः ।
देव सवितः सोम राजन्त्सुमनसं मा कृणु स्वस्तये ॥३॥

अभि । त्वा । इन्द्र । वरिमतः । पुरा । त्वा । अंहूरणात् । हुवे ।
ह्वयामि । उग्रम् । चेत्तारम् । पुरुऽनामानम् । एकऽजम् ॥ १ ॥
यः । अद्य । सेन्यः । वधः । जिघांसन् । नः । उत्ऽईरते ।
इन्द्रस्य । तत्र । बाहू इति । समन्तम् । परि । दद्मः ॥ २ ॥
परि । दद्मः । इन्द्रस्य । बाहू इति । समन्तम् । त्रातुः । त्रायताम् । नः ।
देव । सवितः । सोम । राजन् । सुऽमनसम् । मा । कृणु । स्वस्तये ॥ ३ ॥

( १०० ) शततमं सूक्तम्

(१–३) तृचस्यास्य सूक्तस्य गरुत्मानृषिः । वनस्पतिर्देवता । अनुष्टुप् छन्दः ॥

देवा अदुः सूर्यो अदाद्द्यौरदात्पृथिव्यदात् ।
तिस्रः सरस्वतीरदुः सचित्ता विषदूषणम् ॥१॥

देवाः । अदुः । सूर्यः । अदात् । द्यौः । अदात् । पृथिवी । अदात् ।
तिस्रः । सरस्वतीः । अदुः । सऽचित्ताः । विषऽदूषणम् ॥ १ ॥



**VI.98.3** Of the eastern region, O resplendent one, you are the king; and of the northern region, O slayer of nescience, you are the destroyer of enemies. You have conquered all as far as the rivers go (in the west). Worthy of offerings and full of vigour, may you come from the southern region.

### Indraḥ

**VI.99.1** O resplendent Lord, due to your greatness, even before distress I call upon you; I call upon you, the formidable, the correcter, the one having many names and born alone.

**VI.99.2** If murderous weapon of the army is raised up desirous of killing us today, then we encompass ourselves with the two arms of the resplendent Lord.

### Indraḥ : Somaḥ : Savitṛ

**VI.99.3** We encompass ourselves with the two arms of the resplendent Lord, the saviour. May He save us. O impeller Lord, O blissful King, may you make me good-hearted for my well-being.

### Vanaspatiḥ

**VI.100.1** The bounties of Nature have given; the sun has given; the sky has given; the earth has given; and the three ladies, Idā, Bharti, and Sarasvatī in full accord have given this antidote to poison.

यद्वो देवा उपजीका आसिञ्चन्धन्वन्युदकम् ।
तेन देवप्रसूतेनेदं दूषयता विषम् ॥२॥
असुराणां दुहितासि सा देवानामसि स्वसा ।
दिवस्पृथिव्याः संभूता सा चकर्थारसं विषम् ॥३॥

यत् । वः । देवाः । उपऽजीकाः । आऽअसिञ्चन् । धन्वनि । उदकम् ।
तेन । देवऽप्रसूतेन । इदम् । दूषयत । विषम् ॥ २ ॥
असुराणाम् । दुहिता । असि । सा । देवानाम् । असि । स्वसा ।
दिवः । पृथिव्याः । सम्ऽभूता । सा । चकर्थ । अरसम् । विषम् ॥ ३ ॥

( १०१ ) एकोत्तरशततमं सूक्तम्

(१-३) वृषस्वास्व सूक्तस्याथर्वाङ्गिरा ऋषिः । ब्रह्मणस्पतिर्देवता । अनुष्टुप् छन्दः ॥

आ वृषायस्व श्वसिहि वर्धस्व प्रथयस्व च ।
यथाङ्गं वर्धतां शेपस्तेन योषितमिज्जहि ॥१॥
येन कृशं वाजयन्ति येन हिन्वन्त्यातुरम् ।
तेनास्य ब्रह्मणस्पते धनुरिवा तानया पसः ॥२॥
आहं तनोमि ते पसो अधि ज्यामिव धन्वनि ।
क्रमस्वर्श इव रोहितमनवग्लायता सदा ॥३॥

आ । वृषऽयस्व । श्वसिहि । वर्धस्व । प्रथयस्व । च ।
यथाऽअङ्गम् । वर्धताम् । शेपः । तेन । योषितम् । इत् । जहि ॥१॥
येन । कृशम् । वाजयन्ति । येन । हिन्वन्ति । आतुरम् ।
तेन । अस्य । ब्रह्मणः । पते । धनुःऽइव । आ । तानय । पसः ॥ २ ॥
आ । अहम् । तनोमि । ते । पसः । अधि । ज्याम्ऽइव । धन्वनि ।
क्रमस्व । ऋशःऽइव । रोहितम् । अनवऽग्लायता । सदा ॥ ३ ॥



**VI.100.2** O white ants (upajīkā), what water the bounties of Nature provide for you in the desert, with that, may you counter-act this poison.

**VI.100.3** You are the daughter of life-savers (asura) and sister of the enlightened ones. You have sprung from sky and earth; as such, may you make the poison powerless.

## Brahmaṇaspati

**VI.101.1** Behave like a strong bull. Breathe in vitality. Grow and spread, so that your male organ be developed to the full. With that go to the woman confidently.

**VI.101.2** With which they give new vigour to a lean and thin person, and with which they make a sick person strong and stout, with that, (treatment) O Lord of knowledge, may you make his male organ taut as a bow.

**VI.101.3** I make your penis (member) taut like a bow-string on a bow; mount, as it were a stag, a doe, unrelaxingly always. (Also Av. IV.4.7)

( १०२ ) द्व्युत्तरशततमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य जमदग्निर्ऋषिः । अश्विनौ देवते । अनुष्टुप् छन्दः ॥

यथायं वाहो अश्विना समैति सं च वर्तते ।
एवा मामभि ते मनः समैतु सं च वर्तताम् ॥१॥
आहं खिदामि ते मनो राजाश्वः पृष्ट्यामिव ।
रेष्मच्छिन्नं यथा तृणं मयि ते वेष्टतां मनः ॥२॥
आञ्जनस्य मदुघस्य कुष्ठस्य नलदस्य च ।
तुरो भगस्य हस्ताभ्यामनुरोधनमुद्भरे ॥३॥

यथा । अयम् । वाहः । अश्विना । समऽऐति । सम् । च । वर्तते ।
एव । माम् । अभि । ते । मनः । समऽऐतु । सम् । च । वर्तताम् ॥ १ ॥
आ । अहम् । खिदामि । ते । मनः । राजऽअश्वः । पृष्ट्यामऽइव ।
रेष्मऽछिन्नम् । यथा । तृणम् । मयि । ते । वेष्टताम् । मनः ॥ २ ॥
आऽअञ्जनस्य । मदुघस्य । कुष्ठस्य । नलदस्य । च ।
तुरः । भगस्य । हस्ताभ्याम् । अनुऽरोधनम् । उत् । भरे ॥ ३ ॥

( १०३ ) त्र्युत्तरशततमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्योच्छोचन ऋषिः । मन्त्रोक्ता इन्द्राग्नी वा देवते । अनुष्टुप् छन्दः ॥

संदानं वो बृहस्पतिः संदानं सविता करत् ।
संदानं मित्रो अर्यमा संदानं भगो अश्विना ॥१॥
सं परमान्त्समवमानथो सं द्यामि मध्यमान् ।
इन्द्रस्तान्पर्यहार्दाम्ना तानग्ने सं द्या त्वम् ॥२॥
अमी ये युधमायन्ति केतून्कृत्वानीकशः ।
इन्द्रस्तान्पर्यहार्दाम्ना तानग्ने सं द्या त्वम् ॥३॥

समऽदानम् । वः । बृहस्पतिः । समऽदानम् । सविता । करत् ।
समऽदानम् । मित्रः । अर्यमा । समऽदानम् । भगः । अश्विना ॥ १ ॥
सम् । परमान् । सम् । अवमान् । अथो इति । सम् । द्यामि । मध्यमान् ।
इन्द्रः । तान् । परि । अहाः । दाम्ना । तान् । अग्ने । सम् । द्य । त्वम् ॥ २ ॥
अमी इति । ये । युधम् । आऽयन्ति । केतून् । कृत्वा । अनीकऽशः ।
इन्द्रः । तान् । परि । अहाः । दाम्ना । तान् । अग्ने । सम् । द्य । त्वम् ॥ ३ ॥



## Aśvin - Pair

**VI.102.1** O twins divine (aśvinau), just as this draught-horse comes to and moves along (with his mate), so (O maiden) may your mind come towards me and move along with me.

**VI.102.2** I draw your mind towards me (O maiden), just as a king-horse draws a riding mare to him. May your mind whirl around me like straw broken by the whirlwind.

**VI.102.3** With the hands Bhaga (good luck), I anoint your limbs with the ointment of antimony (āñjana), sugar-cane (madugha), kuṣṭha and spikenard (nalada or nard), a quick means of winning love.

## Bṛhaspati etc.

**VI.103.1** May the Lord supreme bind you; may the impeller Lord bind you. May the friendly Lord and the Lord of justice bind; may the Lord of wealth and glory (bhaga) and the twins divine bind you fast.

**VI.103.2** I hereby bind the highest, the lowest and the middle-ones. The resplendent army chief has surrounded them; O adorable king, may you now fetter them.

**VI.103.3** They who come to battle raising banners in their battalions · them the resplendent army-chief has surrounded; O adorable king, may you now fetter them.

( १०४ ) चतुरुत्तरशततमं सूक्तम्

(१–३) तृचस्यास्य सूक्तस्य प्रशोचन ऋषिः । मन्त्रोक्ता इन्द्राग्नी वा देवते । अनुष्टुप् छन्दः ॥

आदानेन संदानेनामित्राना द्यामसि ।
अपाना ये चैषां प्राणा असुनासून्त्समच्छिदन् ॥१॥
इदमादानमकरं तपसेन्द्रेण संशितम् ।
अमित्रा येऽत्र नः सन्ति तानग्न आ द्या त्वम् ॥२॥
ऐनान्द्यतामिन्द्राग्नी सोमो राजा च मेदिनौ ।
इन्द्रो मरुत्वानादानममित्रेभ्यः कृणोतु नः ॥३॥

आऽदानेन । सम्ऽदानेन । अमित्रान् । आ । द्यामसि ।
अपानाः । ये । च । एषाम् । प्राणाः । असुना । असून् । सम् । अच्छिदन् ॥ १ ॥
इदम् । आऽदानम् । अकरम् । तपसा । इन्द्रेण । सम्ऽशितम् ।
अमित्राः । ये । अत्र । नः । सन्ति । तान् । अग्ने । आ । द्य । त्वम् ॥ २ ॥
आ । एनान् । द्यताम् । इन्द्राग्नी इति । सोमः । राजा । च । मेदिनौ ।
इन्द्रः । मरुत्वान् । आऽदानम् ॥ अमित्रेभ्यः । कृणोतु । नः ॥ ३ ॥

( १०५ ) पञ्चोत्तरशततमं सूक्तम्

(१–३) तृचस्यास्य सूक्तस्योन्मोचन ऋषिः । कासा देवता । अनुष्टुप् छन्दः ॥

यथा मनो मनस्केतैः परापतत्याशुमत् ।
एवा त्वं कासे प्र पत मनसोऽनु प्रवाय्यम् ॥१॥
यथा बाणः सुसंशितः परापतत्याशुमत् ।
एवा त्वं कासे प्र पत पृथिव्या अनु संवतम् ॥२॥
यथा सूर्यस्य रश्मयः परापतन्त्याशुमत् ।
एवा त्वं कासे प्र पत समुद्रस्यानु विक्षरम् ॥३॥

यथा । मनः । मनःऽकेतैः । पराऽपतति । आशुऽमत् ।
एव । त्वम् । कासे । प्र । पत । मनसः । अनु । प्रऽवाय्यम् ॥ १ ॥
यथा । बाणः । सुऽसंशितः । पराऽपतति । आशुऽमत् ।
एव । त्वम् । कासे । प्र । पत । पृथिव्याः । अनु । सम्ऽवतम् ॥ २ ॥
यथा । सूर्यस्य । रश्मयः । पराऽपतन्ति । आशुऽमत् ।
एव । त्वम् । कासे । प्र । पत । समुद्रस्य । अनु । विऽक्षरम् ॥ ३ ॥



## Indrāṇī : Soma : Indra

**VI.104.1** With fetters and ropes we bind up our foes. In-breaths and out-breaths of them, I cut off their lives with life.

**VI.104.2** I have made this fetter, sharpened by the resplendent army-chief, with much zeal. O adorable king, may you fetter our enemies, who are here.

**VI.104.3** May the resplendent army-chief and the adorable king allied and the shining blissful Lord fetter them. May the resplendent army chief make fetters for our enemies.

## Kāsā : Cough

**VI.105.1** As the mind flies fast far away by the objects of thought, so, O cough, may you run away following the destination (flight) of mind.

**VI.105.2** Just as a well-sharpened arrow flies fast far away, so, O cough, may you run away to the lowest end of the earth.

**VI.105.3** Just as the rays of the sun fly fast far away, so O cough (kāsā), may run away to the depths of the ocean.

( १०६ ) षडुत्तरशततमं सूक्तम्

(१-३) त्र्यृचस्यास्य सूक्तस्य प्रमोचन ऋषिः । दूर्वाशाला देवता । अनुष्टुप् छन्दः ॥

आयने ते परायणे दूर्वा रोहन्तु पुष्पिणीः ।
उत्सो वा तत्र जायतां ह्रदो वा पुण्डरीकवान् ॥१॥
अपामिदं न्ययनं समुद्रस्य निवेशनम् ।
मध्ये ह्रदस्य नो गृहाः पराचीना मुखा कृधि ॥२॥
हिमस्य त्वा जरायुणा शाले परि व्ययामसि ।
शीतह्रदा हि नो भुवोऽग्निष्कृणोतु भेषजम् ॥३॥

आऽअयने । ते । पराऽअयने । दूर्वाः । रोहन्तु । पुष्पिणीः ।
उत्सः । वा । तत्र । जायताम् । ह्रदः । वा । पुण्डरीकऽवान् ॥ १ ॥
अपाम् । इदम् । निऽअयनम् । समुद्रस्य । निऽवेशनम् ।
मध्ये । ह्रदस्य । नः । गृहाः । पराचीना । मुखा । कृधि ॥ २ ॥
हिमस्य । त्वा । जरायुणा । शाले । परि । व्ययामसि ।
शीतऽह्रदा । हि । नः । भुवः । अग्निः । कृणोतु । भेषजम् ॥ ३ ॥

( १०७ ) सप्तोत्तरशततमं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्य शन्तातिर्ऋषिः । विश्वजिद्देवता । अनुष्टुप् छन्दः ॥

विश्वजित्त्रायमाणायै मा परि देहि ।
त्रायमाणे द्विपाच्च सर्वं नो रक्ष चतुष्पाद्यच्च नः स्वम् ॥१॥
त्रायमाणे विश्वजिते मा परि देहि ।
विश्वजिद्द्विपाच्च सर्वं नो रक्ष चतुष्पाद्यच्च नः स्वम् ॥२॥

विश्वऽजित् । त्रायमाणायै । मा । परि । देहि ।
त्रायमाणे । द्विऽपात् । च । सर्वम् । नः । रक्ष । चतुःऽपात् । यत् । च । नः । स्वम् ॥१॥
त्रायमाणे । विश्वऽजिते । मा । परि । देहि ।
विश्वऽजित् । द्विऽपात् । च । सर्वम् । नः । रक्ष । चतुःऽपात् । यत् । च । नः । स्वम् ॥२॥



## Dūrvā : Grass : Sāmā

**VI.106.1** At your approach and at the exit, may the dūrvā (Panicum dactylon) grass grow with flowers. May there appear a fountain spring or a water pond with lotuses.

**VI.106.2** Here is the course of flowing waters, here is the abode of flood. May our houses be situated in the midst of the lake. Make the doors facing each other.

**VI.106.3** O house, we encompass you with a perishable foetal covering of snow (himasya jarāyuṇā). May you have cool ponds (śita-hrada) for us. May the fire be a remedy (for cold).

## Viśvajit : All-conquering

**VI.107.1** O conqueror of all, entrust me to the rescuing power. O rescuing power (trāya māṇe), may you protect all our bipeds, and quadrupeds which are our wealth.

**VI.107.2** O rescuing power, entrust me to the conqueror of all. O conqueror of all, may you protect all our bipeds, and quadrupeds which are our wealth.

विश्वजित्कल्याण्यै मा परि देहि ।
कल्याणि द्विपाच्च सर्वं नो रक्ष चतुष्पाद्यच्च नः स्वम् ॥३॥
कल्याणि सर्वविदे मा परि देहि ।
सर्वविद्द्विपाच्च सर्वं नो रक्ष चतुष्पाद्यच्च नः स्वम् ॥४॥

विश्वऽजित् । कल्याण्यै । मा । परि । देहि ।
कल्याणि । द्विऽपात् । च । सर्वम् । नः । रक्ष । चतुःऽपात् । यत् । च । नः । स्वम् ॥३॥
कल्याणि । सर्वऽविदे । मा । परि । देहि ।
सर्वऽवित् । द्विऽपात् । च । सर्वम् । नः । रक्ष । चतुःऽपात् । यत् । च । नः । स्वम् ॥४॥

( १०८ ) अष्टोत्तरशततमं सूक्तम्

(१-५) पञ्चर्चस्यास्य सूक्तस्य शौनक ऋषिः । (१-३,५) प्रथमादितृचस्य पञ्चम्याश्च मेधा, (४) चतुर्थ्या अग्निर्देवते ।
(१, ४-५) प्रथमाचतुर्थीपञ्चमीनामनुष्टुप्, (२) द्वितीयाया उरोबृहती, (३) तृतीयायाश्च पथ्याबृहती छन्दांसि ॥

त्वं नो मेधे प्रथमा गोभिरश्वेभिरा गहि ।
त्वं सूर्यस्य रश्मिभिस्त्वं नो असि यज्ञिया ॥१॥
मेधामहं प्रथमां ब्रह्मण्वतीं ब्रह्मजूतामृषिष्टुताम् ।
प्रपीतां ब्रह्मचारिभिर्देवानामवसे हुवे ॥२॥
यां मेधामृभवो विदुर्यां मेधामसुरा विदुः ।
ऋषयो भद्रां मेधां यां विदुस्तां मय्या वेशयामसि ॥३॥

त्वम् । नः । मेधे । प्रथमा । गोभिः । अश्वेभिः । आ । गहि ।
त्वम् । सूर्यस्य । रश्मिऽभिः । त्वम् । नः । असि । यज्ञिया ॥ १ ॥
मेधाम् । अहम् । प्रथमाम् । ब्रह्मण्ऽवतीम् । ब्रह्मऽजूताम् । ऋषिऽस्तुताम् ।
प्रऽपीताम् । ब्रह्मचारिऽभिः । देवानाम् । अवसे । हुवे ॥ २ ॥
याम् । मेधाम् । ऋभवः । विदुः । याम् । मेधाम् । असुराः । विदुः ।
ऋषयः । भद्राम् । मेधाम् । याम् । विदुः । ताम् । मयि । आ । वेशयामसि ॥ ३ ॥



**VI.107.3** O conqueror of all, entrust me to the virtuous power. O virtuous power, may you protect all bipeds, and quadrupeds which are our wealth.

**VI.107.4** O virtuous Power, entrust me to Omniscient. O Omniscient, may you guard all our bipeds, and quadrupeds which are our wealth.

## Medhā : Understanding

**VI.108.1** O understanding (medhā), the most important, may you come to us with cows, with horses and with rays of the sun. You are adorable to us (useful for our sacrifices).

**VI.108.2** I invoke the understanding (medhā) the foremost, full of knowledge, inspired by knowledge, praised by seers, and drank to their fill by the seekers of knowledge, for helping the enlightened ones.

**VI.108.3** The understanding, which the technicians (ṛbhu) have acquired, the understanding, which the life-enjoyers (life-asuras) have acquired, and the benign understanding, which the seers have acquired, that may you induct into me.

यामृषयो भूतकृतो मेधां मेधाविनो विदुः ।
तया मामद्य मेधयाग्ने मेधाविनं कृणु ॥४॥
मेधां सायं मेधां प्रातर्मेधां मध्यन्दिनं परि ।
मेधां सूर्यस्य रश्मिभिर्वचसा वेशयामहे ॥५॥

याम् । ऋषयः । भूतऽकृतः । मेधाम् । मेधाविनः । विदुः ।
तया । माम् । अद्य । मेधया । अग्ने । मेधाविनम् । कृणु ॥ ४ ॥
मेधाम् । सायम् । मेधाम् । प्रातः । मेधाम् । मध्यन्दिनम् । परि ।
मेधाम् । सूर्यस्य । रश्मिऽभिः । वर्चसा । आ । वेशयामहे ॥ ५ ॥

( १०९ ) नवोत्तरशततमं सूक्तम्

(१-३) त्रयस्यास्य सूक्तस्याथर्वा ऋषिः । पिप्पली भेषजमायुर्वा देवता । अनुष्टुप् छन्दः ॥

पिप्पली क्षिप्तभेषज्यु१तातिविद्धभेषजी ।
तां देवाः समकल्पयन्नियं जीवितवा अलम् ॥१॥
पिप्पल्य१ः समवदन्तायतीर्जननादधि ।
यं जीवमश्नवामहै न स रिष्याति पूरुषः ॥२॥
असुरास्त्वा न्य१खनन्देवास्त्वोदवपन्पुनः ।
वातीकृतस्य भेषजीमथो क्षिप्तस्य भेषजीम् ॥३॥

पिप्पली । क्षिप्तऽभेषजी । उत । अतिविद्धऽभेषजी ।
ताम् । देवाः । सम् । अकल्पयन् । इयम् । जीवितवै । अलम् ॥१॥
पिप्पल्य१ः । सम् । अवदन्त । आऽयतीः । जननात् । अधि ।
यम् । जीवम् । अश्नवामहै । न । सः । रिष्याति । पुरुषः ॥२॥
असुराः । त्वा । नि । अखनन् । देवाः । त्वा । उत् । अवपन् । पुनः ।
वातीऽकृतस्य । भेषजीम् । अथो इति । क्षिप्तस्य । भेषजीम् ॥ ३ ॥



## Agni

**VI.108.4** The understanding, which the wise seers, the creators of beings, have acquired, with that, O adorable Lord, may you make wise today.

## Medhā

**VI.108.5** The understanding in the evening, the understaning in the morning, the understanding throughout the noon, the understanding with the rays of the sun and with the speech we induct into ourselves.

## Pippalī

**VI.109.1** The pippalī (berry, the fruit of Aśvattha) is a remedy for mental diseases and a thorough cure. This the enlightened ones have prepared. This is sufficient to keep a patient alive.

**VI.109.2** Coming out of their birth-place, the pippalis said to each other: "The man, whom we reach living, will not suffer any harm".

**VI.109.3** The life-savers (enjoyers) buried you in. Then the enlightened ones dug you out again - you who are the remedy for nervous diseases and the remedy of mental disturbance.

( ११० ) दशोत्तरशततमं सूक्तम्

(१–३) त्र्यृचस्यास्य सूक्तस्याथर्वा ऋषिः । अग्निर्देवता । (१) प्रथमर्चः पङ्क्तिः, (२–३) द्वितीयातृतीययोश्च त्रिष्टुप् छन्दसी ।

प्रत्नो हि कमीड्यो अध्वरेषु सनाच्च होता नव्यश्च सत्सि ।
स्वां चाग्ने तन्वं पिप्रायस्वास्मभ्यं च सौभगमा यजस्व ॥१॥
ज्येष्ठघ्न्यां जातो विचृतोर्यमस्य मूलबर्हणात्परि पाह्येनम् ।
अत्येनं नेषद्दुरितानि विश्वा दीर्घायुत्वाय शतशारदाय ॥२॥
व्याघ्रेऽह्न्यजनिष्ट वीरो नक्षत्रजा जायमानः सुवीरः ।
स मा वधीत्पितरं वर्धमानो मा मातरं प्र मिनीज्जनित्रीम् ॥३॥

प्रत्नः । हि । कम् । ईड्यः । अध्वरेषु । सनात् । च । होता । नव्यः । च । सत्सि ।
स्वाम् । च । अग्ने । तन्वम् । पिप्रायस्व । अस्मभ्यम् । च । सौभगम् । आ । यजस्व ॥ १ ॥
ज्येष्ठऽघ्न्याम् । जातः । विऽचृतोः । यमस्य । मूलऽबर्हणात् । परि । पाहि । एनम् ।
अति । एनम् । नेषत् । दुःऽइतानि । विश्वा । दीर्घायुऽत्वाय । शतऽशारदाय ॥ २ ॥
व्याघ्रे । अह्नि । अजनिष्ट । वीरः । नक्षत्रऽजाः । जायमानः । सुऽवीरः ।
सः । मा । वधीत् । पितरम् । वर्धमानः । मा । मातरम् । प्र । मिनीत् । जनित्रीम् ॥३॥

( १११ ) एकादशोत्तरशततमं सूक्तम्

(१–४) चतुर्ऋचस्यास्य सूक्तस्याथर्वा ऋषिः । अग्निर्देवता । (१) प्रथमर्चः परानुष्टुप्त्रिष्टुप्, (२–४) द्वितीयादितृचस्य चानुष्टुप् छन्दसी ॥

इमं मे अग्ने पुरुषं मुमुग्ध्ययं यो बद्धः सुयतो लालपीति ।
अतोऽधि ते कृणवद्भागधेयं यदानुन्मदितोऽसति ॥१॥
अग्निष्टे नि शमयतु यदि ते मन उद्युतम् ।
कृणोमि विद्वान्भेषजं यथानुन्मदितोऽससि ॥२॥

इमम् । मे । अग्ने । पुरुषम् । मुमुग्धि । अयम् । यः । बद्धः । सुऽयतः । लालपीति ।
अतः । अधि । ते । कृणवत् । भागऽधेयम् । यदा । अनुत्ऽमदितः । असति ॥१॥
अग्निः । ते । नि । शमयतु । यदि । ते । मनः । उत्ऽयुतम् ।
कृणोमि । विद्वान् । भेषजम् । यथा । अनुत्ऽमदितः । अससि ॥ २ ॥



## Agniḥ

**VI.110.1** O you are the ancient one, joy incarnate, praise-worthy, you are present at the sacrifices as the priest of old and modern times. O fire-divine, may you swell yourself (with our offerings) and bestow good fortune on us.

**VI.110.2** He is born in the killer of the eldest (jyeṣṭhaḥ ghanyām) to the two slayers (vicṛtoḥ) of the controller (death); may protect him well from the uprooter. May you conduct him past all the calamities to the long life of a hundred autumns.

**VI.110.3** This son is born on a tiger-day (vyāghre'hnya). He is born at an auspicious moment. He is very brave from the very birth. Growing up, may he not slay his father; may he not injure his mother who gave birth to him.

## Agniḥ

**VI.111.1** O adorable Lord, may you free from disease this man of mine, who tied down and well-restrained talks deliciously. For this reason, let him make share of offerings for you, so that he may be cured (freed from) of his mania. (ānunmadito'sati)

**VI.111.2** If your mind goes out of control, may the adorable Lord soothe it. Knowing full well, I prepare a medicine, so that you may be (freed from) cured of your mania.

देवैनसादुन्मदितमुन्मत्तं रक्षसस्परि ।
कृणोमि विद्वान्भेषजं यदानुन्मदितोसति ॥३॥
पुनस्त्वा दुरप्सरसः पुनरिन्द्रः पुनर्भगः ।
पुनस्त्वा दुर्विश्वे देवा यथानुन्मदितोससि ॥४॥

देवऽएनसात् । उतऽमदितम् । उतऽमत्तम् । रक्षसः । परि ।
कृणोमि । विद्वान् । भेषजम् । यदा । अनुत्ऽमदितः । असति ॥ ३ ॥
पुनः । त्वा । दुः । अप्सरसः । पुनः । इन्द्रः । पुनः । भगः ।
पुनः । त्वा । दुः । विश्वे । देवाः । यथा । अनुत्ऽमदितः । अससि ॥ ४ ॥

( ११२ ) [illegible] सूक्तम्
(१-३) [illegible] ऋषि । अग्निर्देवता । त्रिष्टुप् छन्दः ।

मा ज्येष्ठं वधीदयमग्न एषां मूलबर्हणात्परि पाह्येनम् ।
स ग्राह्याः पाशान्वि चृत प्रजानन्तुभ्यं देवा अनु जानन्तु विश्वे ॥१॥
उन्मुञ्च पाशांस्त्वमग्न एषां त्रयस्त्रिभिरुत्सिता येभिरासन् ।
स ग्राह्याः पाशान्वि चृत प्रजानन्पितापुत्रौ मातरं मुञ्च सर्वान् ॥२॥
येभिः पाशैः परिवित्तो विबद्धोऽङ्गेअङ्ग आर्पित उत्सितश्च ।
वि ते मुच्यन्तां विमुचो हि सन्ति भ्रूणघ्नि पूषन्दुरितानि मृक्ष्व ॥३॥

मा । ज्येष्ठम् । वधीत् । अयम् । अग्ने । एषाम् । मूलऽबर्हणात् । परि । पाहि । एनम् ।
सः । ग्राह्याः । पाशान् । वि । चृत । प्रऽजानन् । तुभ्यम् । देवाः । अनु । जानन्तु । विश्वे ॥ १ ॥
उत् । मुञ्च । पाशान् । त्वम् । अग्ने । एषाम् । त्रयः । त्रिऽभिः । उत्ऽसिताः । येभिः । आसन् ।
सः । ग्राह्याः । पाशान् । वि । चृत । प्रऽजानन् । पितापुत्रौ । मातरम् । मुञ्च । सर्वान् ॥ २ ॥
येभिः । पाशैः । परिऽवित्तः । विऽबद्धः । अङ्गेऽअङ्गे । आर्पितः । उत्ऽसितः । च ।
वि । ते । मुच्यन्ताम् । विऽमुचः । हि । सन्ति । भ्रूणऽघ्नि । पूषन् । दुःऽइतानि । मृक्ष्व ॥३॥



**VI.111.3** If his mania is due to the fault pertaining to the enlightened ones, or he is mad due to the fault pertaining to the germs, knowing full well, I prepare a medicine, so that he may be cured (freed from) of his mania.

**VI.111.4** The powers contained in water have given you back again; the adorable Lord, and the Lord of good fortune have given you back again; all the bounties of Nature have given you back again, so that you may be cured (freed from) of your mania.

## Agniḥ

**VI.112.1** May this man not murder his eldest, O fire-divine; protect him well from total uprooting. As such, may you, knowing full well, rend the nooses (pāśān), asunder. May all the enlightened ones approve your action.

**VI.112.2** O fire-divine, may you unfasten their nooses, with three of which those three are tied down. As such, may you, knowing full well, rend the nooses of the rheumatism asunder and free all of them, the father, the son and the mother.

**VI.112.3** With what nooses, a married man, having an elder brother unmarried, stays bound, tied up and secured each and every limb, may those nooses of you be unfastened, because there are releasers, O nourisher, may you remove the defects that destroy the embryo.

( ११३ ) त्रयोदशोत्तरशततमं सूक्तम्

(१-३) सूक्तस्यास्य सूक्तस्याथर्वा ऋषिः । पूषा देवता । (१-२) प्रथमाद्वितीययोर्मन्त्रयोस्त्रिष्टुप्, (३) तृतीयायाश्च पङ्क्तिश्छन्दसी ।

त्रिते देवा अमृजतैतदेनस्त्रित एनन्मनुष्येषु ममृजे ।
ततो यदि त्वा ग्राहिरानशे तां ते देवा ब्रह्मणा नाशयन्तु ॥१॥
मरीचीर्धूमान्प्र विशानु पाप्मन्नुदारान्गच्छोत वा नीहारान् ।
नदीनां फेनाँ अनु तान्वि नश्य भ्रूणघ्नि पूषन्दुरितानि मृक्ष्व ॥२॥
द्वादशधा निहितं त्रितस्यापमृष्टं मनुष्यैनसानि ।
ततो यदि त्वा ग्राहिरानशे तां ते देवा ब्रह्मणा नाशयन्तु ॥३॥

त्रिते । देवाः । अमृजत । एतत् । एनः । त्रितः । एनत् । मनुष्येषु । ममृजे ।
ततः । यदि । त्वा । ग्राहिः । आनशे । ताम् । ते । देवाः । ब्रह्मणा । नाशयन्तु ॥ १ ॥
मरीचीः । धुमान् । प्र । विश । अनु । पाप्मन् । उत्ऽआरान् । गच्छ । उत । वा । नीहारान् ।
नदीनाम् । फेनान् । अनु । तान् । वि । नश्य । भ्रूणऽघ्नि । पूषन् । दुःऽइतानि । मृक्ष्व ॥२॥
द्वादशऽधा । निऽहितम् । त्रितस्य । अपऽमृष्टम् । मनुष्यऽएनसानि ।
ततः । यदि । त्वा । ग्राहिः । आनशे । ताम् । ते । देवाः । ब्रह्मणा । नाशयन्तु ॥ ३ ॥

( ११४ ) चतुर्दशोत्तरशततमं सूक्तम्

(१-३) सूक्तस्यास्य सूक्तस्य ब्रह्मा ऋषिः । विश्वे देवा देवताः । अनुष्टुप् छन्दः ।

यद्देवा देवहेडनं देवासश्चकृमा वयम् ।
आदित्यास्तस्मान्नो यूयमृतस्यर्तेन मुञ्चत ॥१॥
ऋतस्यर्तेनादित्या यजत्रा मुञ्चतेह नः ।
यज्ञं यद्यज्ञवाहसः शिक्षन्तो नोपशेकिम ॥२॥
मेदस्वता यजमानाः स्रुचाज्यानि जुह्वतः ।
अकामा विश्वे वो देवाः शिक्षन्तो नोप शेकिम ॥३॥

यत् । देवाः । देवऽहेडनम् । देवासः । चकृम । वयम् ।
आदित्याः । तस्मात् । नः । यूयम् । ऋतस्य । ऋतेन । मुञ्चत ॥ १ ॥
ऋतस्य । ऋतेन । आदित्याः । यजत्राः । मुञ्चत । इह । नः ।
यज्ञम् । यत् । यज्ञऽवाहसः । शिक्षन्तः । न । उपऽशेकिम[1] ॥ २ ॥
मेदस्वता । यजमानाः । स्रुचा । आज्यानि । जुह्वतः ।
अकामाः । विश्वे । वः । देवाः । शिक्षन्तः । न । उप । शेकिम ॥ ३ ॥



## Pūṣan

**VI.113.1** The enlightened ones wiped off this sin and laid it on the mind (trita); the trita (mind) wiped it off and laid it on man. If due to that, any disease has seized you, may the enlightened ones, with their knowledge, make that vanish from you.

**VI.113.2** O evil, go and enter into sun's-ray, or into smokes, or into vapours or into fogs. May you vanish into those foams of rivers. O nourisher, may you remove the defects that destroy the embryo.

**VI.113.3** The sin wiped off the mind (trita) and laid on men is kept in twelve forms (places). If due to that any disease has seized you, may the enlightened ones, with their knowledge, make that vanish from you.

## Viśvedevāḥ

**VI.114.1** O enlightened ones, whatever disregard, we, being ourselves enlightened, have shown to you, from that, O old sages (ādityas), may you absolve us with the eternal law of the sacrifice.

**VI.114.2** O old sages, worthy of worship, may you absolve us with the eternal law of the sacrifice from the guilt, due to which, O performers of sacrifices, we, desirous of performing sacrifices, have been unable to do so.

**VI.114.3** Performing sacrifice with what is rich in fat, and pouring purified sacrificial butter (ājya) with the spoon, without desire, to you, O all gods, i.e., the enlightened ones, we have been unable to do so; (therefore may you absolve us from that guilt).

(११५) पञ्चदशोत्तरशततमं सूक्तम्

(१–३) त्रृचस्यास्य सूक्तस्य ब्रह्मा ऋषिः। विश्वे देवा देवताः। अनुष्टुप् छन्दः।

यद्विद्वांसो यदविद्वांस एनांसि चकृमा वयम्।
यूयं नस्तस्मान्मुञ्चत विश्वे देवाः सजोषसः ॥१॥
यदि जाग्रद्यदि स्वपन्नेन एनस्योऽकरम्।
भूतं मा तस्माद्भव्यं च द्रुपदादिव मुञ्चताम् ॥२॥
द्रुपदादिव मुमुचानः स्विन्नः स्नात्वा मलादिव।
पूतं पवित्रेणेवाज्यं विश्वे शुम्भन्तु मैनसः ॥३॥

यत्। विद्वांसः। यत्। अविद्वांसः। एनांसि। चकृम। वयम्।
यूयम्। नः। तस्मात्। मुञ्चत। विश्वे। देवाः। सऽजोषसः ॥ १ ॥
यदि। जाग्रत्। यदि। स्वपन्। एनः। एनस्यः। अकरम्।
भूतम्। मा। तस्मात्। भव्यम्। च। द्रुपदात्ऽइव। मुञ्चताम् ॥ २ ॥
द्रुपदात्ऽइव। मुमुचानः। स्विन्नः। स्नात्वा। मलात्ऽइव।
पूतम्। पवित्रेणऽइव। आज्यम्। विश्वे। शुम्भन्तु। मा। एनसः ॥ ३ ॥

(११६) षोडशोत्तरशततमं सूक्तम्

(१–३) त्रृचस्यास्य सूक्तस्य जाटिकायन ऋषिः। विवस्वान्देवता। (१, ३) प्रथमा-तृतीययोर्जगती, (२) द्वितीयायाश्च त्रिष्टुप् छन्दसी।

यद्यामं चक्रुर्निखनन्तो अग्रे कार्षीवणा अन्नविदो न विद्यया।
वैवस्वते राजनि तज्जुहोम्यथ यज्ञियं मधुमदस्तु नोऽन्नम् ॥१॥
वैवस्वतः कृणवद्भागधेयं मधुभागो मधुना सं सृजाति।
मातुर्यदेन इषितं न आगन्यद्वा पितापराद्धो जिहीडे ॥२॥
यदीदं मातुर्यदि वा पितुर्नः परि भ्रातुः पुत्राच्चेतस एन आगन्।
यावन्तो अस्मान्पितरः सचन्ते तेषां सर्वेषां शिवो अस्तु मन्युः ॥३॥

यत्। यामम्। चक्रुः। निऽखनन्तः। अग्रे। कार्षीवणाः। अन्नऽविदः। न। विद्यया।
वैवस्वते। राजनि। तत्। जुहोमि। अथ। यज्ञियम्। मधुऽमत्। अस्तु। नः। अन्नम् ॥ १ ॥
वैवस्वतः। कृणवत्। भागऽधेयम्। मधुऽभागः। मधुना। सम्। सृजाति। मातुः। यत्।
एनः। इषितम्। नः। आऽअगन्। यत्। वा। पिता। अपऽराद्धः। जिहीडे ॥ २ ॥
यदि। इदम्। मातुः। यदि। वा। पितुः। नः। परि। भ्रातुः। पुत्रात्। चेतसः। एनः। आऽअगन्।
यावन्तः। अस्मान्। पितरः। सचन्ते। तेषाम्। सर्वेषाम्। शिवः। अस्तु। मन्युः ॥ ३ ॥



## Viśvedevāḥ

**VI.115.1** Knowing or unknowing, whatever sins we have committed, O all the enlightened ones, may you free us from that with friendly unanimity.

**VI.115.2** If awake, or asleep, I the sinful commit any sin, may the beings that are and that would be, free me from that just as from a stake.

**VI.115.3** Like one being freed from the stake, or like a sweating person being freed from filth after a bath, or like melted butter strained with a strainer (pavitreṇa pūtam), may all purge me from sin.

## Vivasvān

**VI.116.1** What rule the farm-labourers, in days of old, made while ploughing the earth, like those who acquire food with their knowledge, that I offer to the king, the rehabilitator; now may our food be sweet and fit for sacrifice.

**VI.116.2** The rehabilitator, the mead-enjoyer, while making share, combines with sweetness the sin, which has come to us from our mother, or what our wronged father has sent in anger.

**VI.116.3** If this sin has come from the thinking of our mother, or of the father, or of the brother, or of the son, then, may the righteous anger of all the elders, who visit us, be propitious to us. (śivaḥ astu manyuḥ).

(११७) सप्तदशोत्तरशततमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य कौशिक ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः ।

अपमित्यमप्रतीत्तं यदस्मि यमस्य येन बलिना चरामि ।
इदं तदग्ने अनृणो भवामि त्वं पाशान्विचृतं वेत्थ सर्वान् ॥१॥
इहैव सन्तः प्रति दद्म एनज्जीवा जीवेभ्यो नि हराम एनत् ।
अपमित्य धान्यं यज्जघसाहमिदं तदग्ने अनृणो भवामि ॥२॥
अनृणा अस्मिन्ननृणाः परस्मिन्तृतीये लोके अनृणाः स्याम ।
ये देवयानाः पितृयाणाश्च लोकाः सर्वान्पथो अनृणा आ क्षियेम ॥३॥

अपऽमित्यम् । अप्रतीत्तम् । यत् । अस्मि । यमस्य । येन । बलिना । चरामि ।
इदम् । तत् । अग्ने । अनृणः । भवामि । त्वम् । पाशान् । विऽचृतम् । वेत्थ । सर्वान् ॥१॥
इह । एव । सन्तः । प्रति । दद्मः । एनत् । जीवाः । जीवेभ्यः । नि । हरामः । एनत्
अपऽमित्य । धान्यम् । यत् । जघस । अहम् । इदम् । तत् । अग्ने । अनृणः । भवामि ॥
अनृणाः । अस्मिन् । अनृणाः । परस्मिन् । तृतीये । लोके । अनृणाः । स्याम ।
ये । देवऽयानाः । पितृऽयानाः । च । लोकाः । सर्वान् । पथः । अनृणाः । आ । क्षियेम ॥३॥

(११८) अष्टादशोत्तरशततमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य कौशिक ऋषिः । अग्निर्देवता । त्रिष्टुप् छन्दः ।

यद्धस्ताभ्यां चकृम किल्बिषाण्यक्षाणां गत्नुमुपलिप्समानाः ।
उग्रंपश्ये उग्रजितौ तदद्याप्सरसावनु दत्तामृणं नः ॥१॥
उग्रंपश्ये राष्ट्रभृत्किल्बिषाणि यदक्षवृत्तमनु दत्तं न एतत् ।
ऋणान्नो नर्णमेर्त्समानो यमस्य लोके अधिरज्जुरायत् ॥२॥
यस्मा ऋणं यस्य जायामुपैमि यं याचमानो अभ्यैमि देवाः ।
ते वाचं वादिषुर्मोत्तरां मद्देवपत्नी अप्सरसावधीतम् ॥३॥

यत् । हस्ताभ्याम् । चकृम । किल्बिषाणि । अक्षाणाम् । गत्नुम् । उपऽलिप्समानाः ।
उग्रंपश्ये इत्युग्रम्ऽपश्ये । उग्रऽजितौ । तत् । अद्य । अप्सरसौ । अनु । दत्ताम् । ऋणम् । नः ॥१॥
उग्रंपश्ये इत्युग्रम्ऽपश्ये । राष्ट्रऽभृत् । किल्बिषाणि । यत् । अक्षऽवृत्तम् । अनु । दत्तम् । नः ।
एतत् । ऋणात् । नः । न । ऋणम् । एर्त्समानः । यमस्य । लोके । अधिऽरज्जुः । आ । अयत् ॥२॥
यस्मै । ऋणम् । यस्य । जायाम् । उपऽएमि । यम् । याचमानः । अभिऽएमि । देवाः । ते ।
वाचम् । वादिषुः । मा । उत्तराम् । मत् । देवपत्नी इति देवऽपत्नी । अप्सरसौ । अधि । इतम् ॥३॥



## Agnih

**VI.117.1** A borrowed loan and not payed back yet, that am I, who move about bound by the mighty controller. O adorable Lord, now may I be free from that debt (anr no bhavāmi). You know how to unfasten all the nooses.

**VI.117.2** While living here, we pay back this debt alive, we repay it to the living ones. What gains I have consumed having borrowed, from that debt, O adorable Lord, now I become free.

**VI.117.3** From debt in this world, free from debt in the yonder world, and free from debt may we be in the third world. What abodes are visited by the enlightened ones and by the elders, may we reach them all free from debt.

## Agnih

**VI.118.1** Desirous of enjoying (obtaining) the objects of our senses, whatever sins we have committed with both our hands, may the two-watchers of our actions, fiercely-seeing and fiercely-conquering, forgive our that lapse today.

**VI.118.2** O fiercely-seeing and O sustainer of kingdom, what sins we commit with our sense-organs, may you two forgive us for that. May the creditor, demanding repayment of his debt from the debtor, not come to us, with a rope in the realm of the controller (death).

**VI.118.3** From whom I have borrowed; whose wife I approach for help; to whom I go begging for money, O enlightened ones, may they not speak disparagingly to me. O you two watchers of our actions, you spouses of the enlightened ones, may you keep this in mind.

(११९) एकोनविंशत्युत्तरशततमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य कौशिक ऋषिः। अग्निर्देवता। त्रिष्टुप् छन्दः।

यददीव्यन्नृणमहं कृणोम्यदास्यन्नग्न उत संगृणामि ।
वैश्वानरो नो अधिपा वसिष्ठ उदिन्नयाति सुकृतस्य लोकम् ॥१॥
वैश्वानराय प्रति वेदयामि यद्यृणं संगरो देवतासु ।
स एतान्पाशान्विचृतं वेद सर्वानथ पक्वेन सह सं भवेम ॥२॥
वैश्वानरः पविता मा पुनातु यत्संगरमभिधावाम्याशाम् ।
अनाजानन्मनसा याचमानो यत्तत्रैनो अप तत्सुवामि ॥३॥

यत् । अदीव्यन् । ऋणम् । अहम् । कृणोमि । अदास्यन् । अग्ने । उत । सम्ऽगृणामि ।
वैश्वानरः । नः । अधिऽपाः । वसिष्ठः । उत् । इत् । नयाति । सुऽकृतस्य । लोकम् ॥ १ ॥
वैश्वानराय । प्रति । वेदयामि । यदि । ऋणम् । सम्ऽगरः । देवतासु ।
सः । एतान् । पाशान् । विऽचृतम् । वेद । सर्वान् । अथ । पक्वेन । सह । सम् । भवेम ॥२॥
वैश्वानरः । पविता । मा । पुनातु । यत् । सम्ऽगरम् । अभिऽधावामि । आऽशाम् ।
अनाजानन् । मनसा । याचमानः । यत् । तत्र । एनः । अप । तत् । सुवामि ॥ ३ ॥

(१२०) विंशत्युत्तरशततमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य कौशिक ऋषिः। मन्त्रोक्ता देवताः। (१) प्रथमर्चो जगती,
(२) द्वितीयायाः पङ्क्तिः, (३) तृतीयायाश्च त्रिष्टुप् छन्दांसि।

यदन्तरिक्षं पृथिवीमुत द्यां यन्मातरं पितरं वा जिहिंसिम ।
अयं तस्माद्गार्हपत्यो नो अग्निरुदिन्नयाति सुकृतस्य लोकम् ॥१॥
भूमिर्मातादितिर्नो जनित्रं भ्रातान्तरिक्षमभिशस्त्या नः ।
द्यौर्नः पिता पित्र्याच्छं भवाति जामिमृत्वा माव पत्सि लोकात् ॥२॥
यत्रा सुहार्दः सुकृतो मदन्ति विहाय रोगं तन्वः स्वायाः ।
अश्लोणा अङ्गैरह्रुताः स्वर्गे तत्र पश्येम पितरौ च पुत्रान् ॥३॥

यत् । अन्तरिक्षम् । पृथिवीम् । उत । द्याम् । यत् । मातरम् । पितरम् । वा । जिहिंसिम ।
अयम् । तस्मात् । गार्हऽपत्यः । नः । अग्निः । उत् । इत् । नयाति । सुऽकृतस्य । लोकम् ॥
भूमिः । माता । अदितिः । नः । जनित्रम् । भ्राता । अन्तरिक्षम् । अभिऽशस्त्या । नः ।
द्यौः । नः । पिता । पित्र्यात् । शम् । भवाति । जामिम् । ऋत्वा । मा । अव । पत्सि । लोकात् ॥
यत्र । सुऽहार्दः । सुऽकृतः । मदन्ति । विऽहाय । रोगम् । तन्वः । स्वायाः ।
अश्लोणाः । अङ्गैः । अह्रुताः । स्वःऽगे । तत्र । पश्येम । पितरौ । च । पुत्रान् ॥ ३ ॥



## Vaiśvānaro'gniḥ

**VI.119.1** If I incur debt withouut gambling, and O adorable Lord, if I promise without intending to pay, may the benefactor of all men, the rehabilitator, the overlord, lead us up to the world of virtues.

**VI.119.2** I declare to the benefactor of all men the debt, which I have promised to repay to the enlightened ones. He knows how to unfasten all these noosess. Then may we be united with the ripened fruit of our actions.

**VI.119.3** May the purifier benefactor of all men purify me. If I go against the promise and the expectation, without knowing the reality, begging with my mind for material gains; what sin is therein, that I dispel.

## Antarikṣa etc (As per verses)

**VI.120.1** What violence we have perpetrated on the midspace, on the earth, or even on the sky, or on our mother, or on our father, facing us from that guilt, may this house-hold fire lead us up to the land of virtuous.

**VI.120.2** The indivisible earth is our mother, who gave us birth; the midspace is our brother, who protects us from ill fame; the sky is our father who saves us from paternal guilt. Having gone to relatives (for help), may I not fall down from the esteem of the people.

**VI.120.3** Where the virtuous ones live in friendly happiness, leaving behind the diseases of their bodies, undeformed in limbs and free from lameness - there in the heaven, may we see our parents as well as our children.

( १२१ ) एकविंशत्युत्तरशततमं सूक्तम्

(१–४) चतुर्ऋचस्यास्य सूक्तस्य कौशिक ऋषिः । मन्त्रोक्ता देवताः । (१–२) प्रथमा-
द्वितीययोर्ऋचोस्त्रिष्टुप्, (३–४) तृतीयाचतुर्थ्योरनुष्टुप् छन्दसी ।

वि॒षाणा॒ पाशा॒न्वि ष्या॒ध्य॑स्मद्य उ॑त्त॒मा अ॑ध॒मा वा॑रु॒णा ये ।
दु॒ष्वप्न्यं॑ दुरि॒तं नि ष्वा॒स्मदथ॑ गच्छेम सु॒कृत॑स्य लो॒कम् ॥१॥
यद्दारु॑णि ब॒ध्यसे॒ यच्च॒ रज्ज्वां॒ यद्भूम्यां॒ ब॒ध्यसे॒ यच्च॑ वा॒चा ।
अ॒यं तस्मा॒द्गार्ह॑पत्यो नो अ॒ग्निरुदि॑न्नयाति सु॒कृत॑स्य लो॒कम् ॥२॥
उद॑गाता॒ं भग॑वती वि॒चृतौ॒ नाम॒ तार॑के ।
प्रेहामृत॑स्य यच्छता॒ं प्रैतु॑ बद्धकमोच॑नम् ॥३॥
वि जि॑हीष्व लो॒कं कृ॑णु ब॒न्धान्मु॑ञ्चासि॒ बद्ध॑कम् ।
योन्या॑ इ॒व प्रच्यु॑तो॒ गर्भः॑ प॒थः सर्वां॒ अनु॑ क्षिय ॥४॥

वि॒ऽसाना॑ । पाशा॑न् । वि । स्य॒ । अधि॑ । अ॒स्मत् । ये । उ॒त्ऽत॒माः । अ॒ध॒माः । वा॒रु॒णाः । ये ।
दुः॒ऽस्वप्न्य॑म् । दुः॒ऽइ॒तम् । निः । स्व॒ । अ॒स्मत् । अथ॑ । ग॒च्छे॒म॒ । सु॒ऽकृत॑स्य । लो॒कम् ॥ १ ॥
यत् । दारु॑णि । ब॒ध्यसे॑ । यत् । च॒ । रज्ज्वा॑म् । यत् । भूम्या॑म् । ब॒ध्यसे॑ । यत् । च॒ । वा॒चा ।
अ॒यम् । तस्मा॑त् । गार्ह॑ऽपत्यः । नः॒ । अ॒ग्निः । उत् । इत् । न॒याति॒ । सु॒ऽकृत॑स्य । लो॒कम् ॥२॥
उत् । अ॒गा॒ता॒म् । भग॑वती इति॒ भग॑ऽवती । वि॒ऽचृतौ॑ । नाम॑ । तार॑के॒ इति॑ ।
प्र । इ॒ह । अ॒मृत॑स्य । य॒च्छ॒ता॒म् । प्र । ए॒तु॒ । ब॒द्ध॒क॒ऽमोच॑नम् ॥ ३ ॥
वि । जि॒ही॒ष्व॒ । लो॒कम् । कृ॒णु॒ । ब॒न्धात् । मु॒ञ्चा॒सि॒ । बद्ध॑कम् ।
योन्याः॑ऽइव । प्र॒ऽच्यु॑तः । गर्भः॑ । प॒थः । सर्वा॑न् । अनु॑ । क्षि॒य॒ ॥ ४ ॥

( १२२ ) द्वाविंशत्युत्तरशततमं सूक्तम्

(१–५) पञ्चर्चस्यास्य सूक्तस्य भृगुर्ऋषिः । विश्वकर्मा देवता । (१–३) प्रथमादितृचस्य त्रिष्टुप्,
(४–५) चतुर्थीपञ्चम्योर्ऋचोश्च जगती छन्दसी ।

ए॒तं भा॒गं परि॑ ददामि वि॒द्वान्विश्व॑कर्मन्प्रथम॒जा ऋ॒तस्य॑ ।
अ॒स्माभि॑र्द॒त्तं ज॒रसः॑ प॒रस्ता॒दच्छि॑न्नं॒ तन्तु॒मनु॒ सं त॑रेम ॥१॥

ए॒तम् । भा॒गम् । परि॑ । द॒दा॒मि॒ । वि॒द्वान् । विश्व॑ऽकर्मन् । प्र॒थ॒म॒ऽजाः । ऋ॒तस्य॑ ।
अ॒स्माभिः॑ । द॒त्तम् । ज॒रसः॑ । प॒रस्ता॑त् । अच्छि॑न्नम् । तन्तु॑म् । अनु॑ । सम् । त॒रे॒म॒ ॥



## Agni etc, (as per verses)

**VI.121.1** Unfastening the fetters, that are the highest and lowest, of the venerable Lord, may you take off those from us. May you remove the evil of frightening dreams from us. And then, may we go to the land of the virtuous.

**VI.121.2** If you are bound to a log, or with a rope; if you are bound under-ground, or with the speech-freeing us from that, may this house-hold fire lead us up to the land of the virtuous.

**VI.121.3** Two stars, releasers (vicṛtau) be their name, glorious and prosperous ones, have risen up. May they bestow immortality here; may the releaser of the bound ones come quickly.

**VI.121.4** Move on. Make place. Release the bound one from bonds. Like a new-born, having emerged from the womb, may you follow all the ways (you like).

## Viśvakarmā

**VI.122.1** O Lord of all actions (universal architect), (knowing that) you are the first ordainer of the eternal law, I offer this portion (of mine) to you. Beyond old age, may we go across following the unbroken line of what we have given.

ततं तन्तुमन्वेके तरन्ति येषां दत्तं पित्र्यमायनेन ।
अबन्ध्वेके ददतः प्रयच्छन्तो दातुं चेच्छिक्षान्त्स स्वर्ग एव ॥२॥
अन्वारभेथामनुसंरभेथामेतं लोकं श्रद्दधानाः सचन्ते ।
यद्वां पक्वं परिविष्टमग्नौ तस्य गुप्तये दंपती सं श्रयेथाम् ॥३॥
यज्ञं यन्तं मनसा बृहन्तमन्वारोहामि तपसा सयोनिः ।
उपहूता अग्ने जरसः परस्तात्तृतीये नाके सधमादं मदेम ॥४॥
शुद्धाः पूता योषितो यज्ञिया इमा ब्रह्मणां हस्तेषु प्रपृथक्सादयामि ।
यत्काम इदमभिषिञ्चामि वोऽहमिन्द्रो मरुत्वान्त्स ददातु तन्मे ॥५॥

ततम् । तन्तुम् । अनु । एके । तरन्ति । येषाम् । दत्तम् । पित्र्यम् । आऽअयनेन ।
अबन्धु । एके । ददतः । प्रऽयच्छन्तः । दातुम् । च । इत् । शिक्षान् । सः । स्वःऽगः । एव ॥
अनुऽआरभेथाम् । अनुऽसंरभेथाम् । एतम् । लोकम् । श्रत्ऽदधानाः । सचन्ते । यत् । वाम् ।
पक्वम् । परिऽविष्टम् । अग्नौ । तस्य । गुप्तये । दंपती इति दम्ऽपती । सम् । श्रयेथाम् ॥
यज्ञम् । यन्तम् । मनसा । बृहन्तम् । अनुऽआरोहामि । तपसा । सऽयोनिः ।
उपऽहूताः । अग्ने । जरसः । परस्तात् । तृतीये । नाके । सधऽमादम् । मदेम ॥ ४ ॥
शुद्धाः । पूताः । योषितः । यज्ञियाः । इमाः । ब्रह्मणाम् । हस्तेषु । प्रऽपृथक् । सादयामि ।
यत्ऽकामः । इदम् । अभिऽसिञ्चामि । वः । अहम् । इन्द्रः । मरुत्वान् । सः । ददातु ।
तत् । मे ॥ ५ ॥

( १२३ ) [illegible] सूक्तम्

(१–५) एतत्संख्यस्य सूक्तस्य भृगुर्ऋषिः । विश्वे देवा देवताः । (१–२, ५) [illegible] त्रिष्टुप्,
(३) तृतीयाया द्विपदा साम्न्यनुष्टुप्, (४) चतुर्थ्या एकावसाना द्विपदा [illegible] भुरिगनुष्टुप् छन्दांसि ॥

एतं सधस्थाः परि वो ददामि यं शेवधिमावहाज्जातवेदाः ।
अन्वागन्ता यजमानः स्वस्ति तं स्म जानीत परमे व्योमन् ॥१॥

एतम् । सधऽस्थाः । परि । वः । ददामि । यम् । शेवऽधिम् । आऽवहात् । जातऽवेदाः ।
अनुऽआगन्ता । यजमानः । स्वस्ति । तम् । स्म । जानीत । परमे । विऽओमन् ॥ १ ॥



**VI.122.2** Some person, whose ancestral debt is repaid by coming generation, go across following the extended line. Some others, having no kins, repay the debt to the creditors, if they are able to do so. That is verily the heaven.

**VI.122.3** O both of you, start to accomlish it; make determined effort to accomlish it. Those having unflinching faith attain this abode of happiness. Whatever ripe offerings you have made in fire of sacrifice, may both, the husband and wife, stand united to guard them with care.

**VI.122.4** Following the great sacrifice, which is going to the enlightened ones, I of the same origin, ascend to the heaven with will and fervor. O adorable Lord, beyond old age, having been called up, may we live in happiness jointly in the third sorrowless world.

**VI.122.5** These are pure, pious, and holy women. I place them singly in the hands of the pious learned persons. With what desire I pour this libation for you; may he, the resplendent Lord with cloud-bearing winds, grant that to me.

### Viśvedevāḥ

**VI.123.1** You, who are present, to you I offer these entire riches, brought to us by Jātavedā, one who knows all that is born. The sacrificer is sure to follow. May you receive him in heaven. (Also Yv. XVIII.59)

जानीत स्मैनं परमे व्योमन्देवाः सधस्था विद लोकमत्र ।
अन्वागन्ता यजमानः स्वस्तीष्टापूर्तं स्म कृणुताविरस्मै ॥२॥
देवाः पितरः पितरो देवाः । यो अस्मि सो अस्मि ॥३॥
स पचामि स ददामि स यजे स दत्तान्मा यूषम् ॥४॥
नाके राजन्प्रति तिष्ठ तत्रैतत्प्रति तिष्ठतु ।
विद्धि पूर्तस्य नो राजन्त्स देव सुमना भव ॥५॥

जानीत । स्म । एनम् । परमे । विऽओमन् । देवाः । सधऽस्थाः । विद । लोकम् । अत्र ।
अनुऽआगन्ता । यजमानः । स्वस्ति । इष्टापूर्तम् । स्म । कृणुत । आविः । अस्मै ॥ २ ॥
देवाः । पितरः । पितरः । देवाः । यः । अस्मि । सः । अस्मि ॥ ३ ॥
सः । पचामि । सः । ददामि । सः । यजे । सः । दत्तात् । मा । यूषम् ॥ ४ ॥
नाके । राजन् । प्रति । तिष्ठ । तत्र । एतत् । प्रति । तिष्ठतु ।
विद्धि । पूर्तस्य । नः । राजन् । सः । देव । सुऽमनाः । भव ॥ ५ ॥

( १२४ ) चतुर्विंशत्युत्तरशततमं सूक्तम्

(१-२) बृहस्पास्य सूक्तस्याथर्वा ऋषिः । मन्त्रोक्ता दिव्या आपो वा देवताः । त्रिष्टुप् छन्दः ॥

दिवो नु मां बृहतो अन्तरिक्षादपां स्तोको अभ्यपप्तद्रसेन ।
समिन्द्रियेण पयसाहमग्ने छन्दोभिर्यज्ञैः सुकृतां कृतेन ॥१॥
यदि वृक्षादभ्यपप्तत्फलं तद्यद्यन्तरिक्षात्स उ वायुरेव ।
यत्रास्पृक्षत्तन्वो यच्च वासस आपो नुदन्तु निर्ऋतिं पराचैः ॥२॥

दिवः । नु । माम् । बृहतः । अन्तरिक्षात् । अपाम् । स्तोकः । अभि । अपप्तत् । रसेन ।
सम् । इन्द्रियेण । पयसा । अहम् । अग्ने । छन्दःऽभिः । यज्ञैः । सुऽकृताम् । कृतेन ॥ १ ॥
यदि । वृक्षात् । अभिऽअपप्तत् । फलम् । तत् । यदि । अन्तरिक्षात् । सः । ऊं इति । वायुः । एव ।
यत्र । अस्पृक्षत् । तन्वः । यत् । च । वाससः । आपः । नुदन्तु । निःऽऋतिम् । पराचैः ॥२॥



**VI.123.2** Do you recognize him in the highest heaven (parama vyoman). Of course, you know people here in the presant society. One who is engaged in sacrifice shall have peace; lead him to the joy that comes from good actions.

**VI.123.3** The enlightened ones are the elders, and the elders the enlightened ones. What I am, I am.

**VI.123.4** The same I cook; the same I give; the same I perform the sacrifice (worship): may the same I never be parted from the fruit of what I have given.

**VI.123.5** Stay in the sorrowless world, O king: may this (sacrifice also) stay there. May you know of the offerings we have given, O king. O Lord, as such may you be friendly towards us.

### Divyāḥ Āpaḥ

**VI.124.1** From the vast sky, or from the midspace, a drop of water with pleasure fall upon me. O adorable Lord, may I be united with power of my sense-organs, with milk, with praises, with sacrifices and with the fruit of pious deeds.

**VI.124.2** If it falls from a tree, it is a fruit; if from the midspace, then it is surely the wind only. Where it touches a part of the body or of clothing, from there may the waters dispel distress (perdition) away from us.

अभ्यञ्जनं सुरभि सा समृद्धिर्हिरण्यं वर्चस्तदु पूत्रिममेव ।
सर्वा पवित्रा वितताध्यस्मत्तन्मा तारीन्निर्ऋतिर्मो अरातिः ॥३॥

अभिऽअञ्जनम् । सुरभि । सा । समऽऋद्धिः । हिरण्यम् । वर्चः । तत् । ऊं इति । पूत्रिमम् । एव ।
सर्वा । पवित्रा । विऽतता । अधि । अस्मत् । तत् । मा । तारीत् । निःऽऋतिः । मो इति । अरातिः ॥३

(१२५) पञ्चविंशत्युत्तरशततमं सूक्तम्
(१-३) तृचस्यास्य सूक्तस्याथर्वा ऋषिः । वनस्पतिर्देवता । (१, ३) प्रथमा-तृतीययोर्ऋचोस्त्रिष्टुप्, (२) द्वितीयायाश्च जगती छन्दसी ॥

वनस्पते वीड्वङ्गो हि भूया अस्मत्सखा प्रतरणः सुवीरः ।
गोभिः संनद्धो असि वीडयस्वास्थाता ते जयतु जेत्वानि ॥१॥
दिवस्पृथिव्याः पर्योज उद्भृतं वनस्पतिभ्यः पर्याभृतं सहः ।
अपामोज्मानं परि गोभिरावृतमिन्द्रस्य वज्रं हविषा रथं यज ॥२॥
इन्द्रस्यौजो मरुतामनीकं मित्रस्य गर्भो वरुणस्य नाभिः ।
स इमां नो हव्यदातिं जुषाणो देव रथ प्रति हव्या गृभाय ॥३॥

वनस्पते । वीडुऽअङ्गः । हि । भूयाः । अस्मत्ऽसखा । प्रऽतरणः । सुऽवीरः ।
गोभिः । सम्ऽनद्धः । असि । वीडयस्व । आऽस्थाता । ते । जयतु । जेत्वानि ॥ १ ॥
दिवः । पृथिव्याः । परि । ओजः । उत्ऽभृतम् । वनस्पतिऽभ्यः । परि । आऽभृतम् । सहः ।
अपाम् । ओज्मानम् । परि । गोभिः । आऽवृतम् । इन्द्रस्य । वज्रम् । हविषा । रथम् । यज ॥ २ ॥
इन्द्रस्य । ओजः । मरुताम् । अनीकम् । मित्रस्य । गर्भः । वरुणस्य । नाभिः ।
सः । इमाम् । नः । हव्यऽदातिम् । जुषाणः । देव । रथ । प्रति । हव्या । गृभाय ॥ ३ ॥

(१२६) षड्विंशत्युत्तरशततमं सूक्तम्
(१-३) तृचस्यास्य सूक्तस्याथर्वा ऋषिः । वानस्पत्यदुन्दुभिर्देवता । (१-२) प्रथमाद्वितीययो-र्ऋचोर्भुरिक्त्रिष्टुप्, (३) तृतीयायाश्च पुरोबृहतीविराड्गर्भा त्रिष्टुप् छन्दसी ॥

उप श्वासय पृथिवीमुत द्यां पुरुत्रा ते वन्वतां विष्ठितं जगत् ।
स दुन्दुभे सजूरिन्द्रेण देवैर्दूराद्दवीयो अप सेध शत्रून् ॥१॥

उप । श्वासय । पृथिवीम् । उत । द्याम् । पुरुऽत्रा । ते । वन्वताम् । विऽस्थितम् । जगत् ।
सः । दुन्दुभे । सऽजूः । इन्द्रेण । देवैः । दूरात् । दवीयः । अप । सेध । शत्रून् ॥ १ ॥



**VI.124.3** O sweet-smelling ointment, the prosperity, the gold, the splendour, all that is surely purifying. All the purifiers are spread over us. Therefore, may the distress (perdition) never overwhelm us, nor the niggardness (arāti).

## Vanaspatiḥ (herb)

**VI.125.1** May the chariot made of strong wood be wholesome; may it be our friend; our protector, and manned by brave men. May it show forth its strength, compact with the straps of leather and let its rider be victorious in the battle. (Also Ṛg. VI.47.26)

**VI.125.2** Show full respect to the chariot replete with synthesis of basic elements of heaven and earth - the divine extracted essence of the forest wood. It possesses the velocity of waters, and is encompassed with the cow-hide and the thunderbolt. (Also Ṛg. VI.47.27)

**VI.125.3** O all pervading Lord of the celestial chariot, your vehicle is as powerful as the bolt of justice of the resplendent Lord. It is the precursor of vital principles, and is as vast as our ocean. It is bright as sunrays. May you accept it offered with prayers and oblations. (Also Ṛg. VI.47.28)

## Dundubhiḥ - Drum

**VI.126.1** O war drums, fill with your thumping sound the earth and heaven. Let all things, movable or stationary be aware of it. May you associated with the resplendent Lord and Nature's forces drive all malign elements far from us. (Also Ṛg. VI.47.29)

आ क्रन्दय बलमोजो न आ धा अभि ष्टन दुरिता बाधमानः ।
अप सेध दुन्दुभे दुच्छुनामित इन्द्रस्य मुष्टिरसि वीडयस्व ॥२॥
प्रामूं जयाभीऽमे जयन्तु केतुमद्दुन्दुभिर्वावदीतु ।
समश्वपर्णाः पतन्तु नो नरोऽस्माकमिन्द्र रथिनो जयन्तु ॥३॥

आ । क्रन्दय । बलम् । ओजः । नः । आ । धाः । अभि । स्तन । दुःऽइता । बाधमानः ।
अप । सेध । दुन्दुभे । दुच्छुनाम् । इतः । इन्द्रस्य । मुष्टिः । असि । वीडयस्व ॥ २ ॥
प्र । अमूम् । जय । अभि । इमे । जयन्तु । केतुऽमत् । दुन्दुभिः । वावदीतु ।
सम् । अश्वऽपर्णाः । पतन्तु । नः । नरः । अस्माकम् । इन्द्र । रथिनः । जयन्तु ॥ ३ ॥

(१२७) सप्तविंशत्युत्तरशततमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य भृग्वङ्गिरा ऋषिः। वनस्पतिर्यक्ष्मनाशनं वा देवता। (१-२) प्रथमाद्वितीययो-रनुष्टुप्, (३) तृतीयायाश्च त्र्यवसाना षट्पदा जगती छन्दसी ॥

विद्रधस्य बलासस्य लोहितस्य वनस्पते ।
विसल्पकस्योषधे मोच्छिषः पिशितं चन ॥१॥
यौ ते बलास तिष्ठतः कक्षे मुष्कावपश्रितौ ।
वेदाहं तस्य भेषजं चीपुद्रुरभिचक्षणम् ॥२॥
यो अङ्ग्यो यः कर्ण्यो यो अक्ष्योर्विसल्पकः ।
वि वृहामो विसल्पकं विद्रधं हृदयामयम् ॥
परा तमज्ञातं यक्ष्ममधराञ्चं सुवामसि ॥३॥

विऽद्रधस्य । बलासस्य । लोहितस्य । वनस्पते ।
विऽसल्पकस्य । ओषधे । मा । उत् । शिषः । पिशितम् । चन ॥ १ ॥
यौ । ते । बलास । तिष्ठतः । कक्षे । मुष्कौ । अपऽश्रितौ ।
वेद । अहम् । तस्य । भेषजम् । चीपुद्रुः । अभिऽचक्षणम् ॥ २ ॥
यः । अङ्ग्यः । यः । कर्ण्यः । यः । अक्ष्योः । विऽसल्पकः । वि । वृहामः । विऽसल्पकम् । विऽद्रधम् ।
हृदयऽआमयम् । परा । तम् । अज्ञातम् । यक्ष्मम् । अधराञ्चम् । सुवामसि ॥ ३ ॥



**VI.126.2** May (O drum) you sound loud and animate our vigour and enthusiasm. May you thunder aloud and scare away malignant powers. Please repel, O drum, those who take delight in harming us. You, being the first of the divines, show your firmness. (Also Ṛg. VI.47.30)

**VI.126.3** O resplendent Lord, the drum sounds repeatedly as a signal. May you recover the lost cattle of wisdom and bring it back here. Our leaders mounted (winged with horses), as if, on speedy fly together. Let our car-borne fighting faculties against vice and nescience be triumphant. (Also Ṛg. VI.47.31)

### Vanaspatiḥ (herb)

**VI.127.1** O lord of the forest, O herb, may you not leave even a (trace), particle remaining of the cold abcess, the wasting disease, haemorrage and the herpes.

**VI.127.2** O wasting disease, the two swelling of glands, which have sprung in your armpits - of those I know the remedy. Cīpudru is a sure cure for that.

**VI.127.3** The penetrating disease, pertaining to limbs, or pertaining to ears, or pertaining to eyes - that penetrating disease we drive out, as well as the haemorrage (vidradham), and the heart-trouble (hrdayāmayam). We force that unknown consumption downwards far away.

( १२८ ) अष्टाविंशत्युत्तरशततमं सूक्तम्

(१-४) चतुर्ऋचस्यास्य सूक्तस्याथर्वाङ्गिरा ऋषिः । सोमः शकधूमश्च देवते । अनुष्टुप् छन्दः ।

शकधूमं नक्षत्राणि यद्राजानमकुर्वत ।
भद्राहमस्मै प्रायच्छन्निदं राष्ट्रमसादिति ॥१॥
भद्राहं नो मध्यन्दिने भद्राहं सायमस्तु नः ।
भद्राहं नो अह्नां प्राता रात्री भद्राहमस्तु नः ॥२॥
अहोरात्राभ्यां नक्षत्रेभ्यः सूर्याचन्द्रमसाभ्याम् ।
भद्राहमस्मभ्यं राजञ्छकधूम त्वं कृधि ॥३॥
यो नो भद्राहमकरः सायं नक्तमथो दिवा ।
तस्मै ते नक्षत्रराज शकधूम सदा नमः ॥४॥

शकऽधूमम् । नक्षत्राणि । यत् । राजानम् । अकुर्वत ।
भद्रऽअहम् । अस्मै । प्र । अयच्छन् । इदम् । राष्ट्रम् । असात् । इति ॥ १ ॥
भद्रऽअहम् । नः । मध्यंदिने । भद्रऽअहम् । सायम् । अस्तु । नः ।
भद्रऽअहम् । नः । अह्नाम् । प्रातः । रात्री । भद्रऽअहम् । अस्तु । नः ॥ २ ॥
अहोरात्राभ्याम् । नक्षत्रेभ्यः । सूर्याचन्द्रमसाभ्याम् ।
भद्रऽअहम् । अस्मभ्यम् । राजन् । शकऽधूम । त्वम् । कृधि ॥ ३ ॥
यः । नः । भद्रऽअहम् । अकरः । सायम् । नक्तम् । अथो इति । दिवा ।
तस्मै । ते । नक्षत्रऽराज । शकऽधूम । सदा । नमः ॥ ४ ॥

( १२९ ) एकोनत्रिंशदुत्तरशततमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्याथर्वा ऋषिः । भगो देवता । अनुष्टुप् छन्दः ।

भगेन मा शांशपेन साकमिन्द्रेण मेदिना ।
कृणोमि भगिनं माप द्रान्त्वरातयः ॥१॥

भगेन । मा । शांशपेन । साकम् । इन्द्रेण । मेदिना ।
कृणोमि । भगिनम् । मा । अप । द्रान्तु । अरातयः ॥ १ ॥



## Śaka dhūmaḥ - Cow dung smoke - Somaḥ

**VI.128.1** When the stars (nakṣatrāṇi) made the cow-dung-smoke (śaka-dhūmam) the king (of weather forecasting), they gave an auspicious day to it, so that will be his domain (rāṣtra).

**VI.128.2** May it be a good day for us at noon (madhyandine); may it be a good day for us in the evening; may it be a good day for us in the morning of the days; and may it be a good day for us at nights.

**VI.128.3** O shining cow-dung-smoke, (śaka dhūma), may you make a good day for day and night, for constellations, for sun and moon, and good day for us.

**VI.128.4** To you, O cow-dung-smoke, the king of the stars, who make good day for us in the evening, at night and in the day, we always bow in reverence.

## Bhagaḥ

**VI.129.1** With the magnificence of the Sīsama or Sisu (śāṅśapa) (Dalbergia Sisu) tree, in company of the friendly resplendent one, I make myself magnificent. May the enemies not paying our dues run away helter-skelter.

येन वृक्षाँ अभ्यभवो भगेन वर्चसा सह ।
तेन मा भगिनं कृण्वप द्रान्त्वरातयः ॥२॥
यो अन्धो यः पुनःसरो भगो वृक्षेष्वाहितः ।
तेन मा भगिनं कृण्वप द्रान्त्वरातयः ॥३॥

येन । वृक्षान् । अभिऽअभवः । भगेन । वर्चसा । सह ।
तेन । मा । भगिनम् । कृणु । अप । द्रान्तु । अरातयः ॥ २ ॥
यः । अन्धः । यः । पुनःऽसरः । भगः । वृक्षेषु । आऽहितः ।
तेन । मा । भगिनम् । कृणु । अप । द्रान्तु । अरातयः ॥ ३ ॥

( १३० ) [illegible] सूक्तम्
(१-४) चतुर्ऋचस्यास्य सूक्तस्याथर्वा ऋषिः । स्मरो देवता । (१) प्रथमर्चो विराड् पुरस्ताद्बृहती,
(२-४) द्वितीयादितृचस्य चानुष्टुप् छन्दसी ।

रथजितां राथजितेयीनामप्सरसामयं स्मरः ।
देवाः प्र हिणुत स्मरमसौ मामनु शोचतु ॥१॥
असौ मे स्मरतादिति प्रियो मे स्मरतादिति ।
देवाः प्र हिणुत स्मरमसौ मामनु शोचतु ॥२॥
यथा मम स्मरादसौ नामुष्याहं कदा चन ।
देवाः प्र हिणुत स्मरमसौ मामनु शोचतु ॥३॥
उन्मादयत मरुत उदन्तरिक्ष मादय ।
अग्न उन्मादया त्वमसौ मामनु शोचतु ॥४॥

रथऽजिताम् । राथऽजितेयीनाम् । अप्सरसाम् । अयम् । स्मरः ।
देवाः । प्र । हिनुत । स्मरम् । असौ । माम् । अनु । शोचतु । १ ॥
असौ । मे । स्मरतात् । इति । प्रियः । मे । स्मरतात् । इति ।
देवाः । प्र । हिनुत । स्मरम् । असौ । माम् । अनु । शोचतु ॥ २ ॥
यथा । मम । स्मरात् । असौ । न । अमुष्य । अहम् । कदा । चन ।
देवाः । प्र । हिनुत । स्मरम् । असौ । माम् । अनु । शोचतु ॥ ३ ॥
उत् । मादयत । मरुतः । उत् । अन्तरिक्ष । मादय ।
अग्ने । उत् । मादय । त्वम् । असौ । माम् । अनु । शोचतु ॥ ४ ॥



**VI.129.2** With what magnificence and splendour you have surpassed the trees, by that may you make me magnificent. May the enemies, not paying our dues, run away helter-skelter.

**VI.129.3** With that blinding and recurring magnificence, which has been laid in the trees, may you make me magnificent. May enemies, not paying our dues, run away helter-skelter.

### Smaraḥ : Love and Passion

**VI.130.1** This is the passionate love of the apsaras (beauties) chariot-winning and belonging to the chariot-winners. O bounties of Nature, send forth the passionate love. Let so and so wail for me (asau māmanu śocatu.)

**VI.130.2** So that may so and so (asau) remember me; so that my beloved remember me; O bounties of Nature, send forth the passionate love. Let so and so wail for me.

**VI.130.3** So that may so and so remember me and may I never remember so and so, O bounties of Nature, send forth the passionate love. Let so and so wail for me.

**VI.130.4** O cloud-bearing winds, make him crazy; make him crazy O midspace. O fire divine, may you make him crazy. Let him wail for me.

( १३१ ) एकत्रिंशदुत्तरशततमं सूक्तम्

(१-३) [illegible] सूक्तस्याथर्वा ऋषिः । स्मरो देवता । अनुष्टुप् छन्दः ॥

नि शीर्षतो नि पत्तत आध्यो३ नि तिरामि ते ।
देवाः प्र हिणुत स्मरमसौ मामनु शोचतु ॥१॥
अनुमतेन्विदं मन्यस्वाकूते समिदं नमः ।
देवाः प्र हिणुत स्मरमसौ मामनु शोचतु ॥२॥
यद्धावसि त्रियोजनं पञ्चयोजनमाश्विनम् ।
ततस्त्वं पुनरायसि पुत्राणां नो असः पिता ॥३॥

नि । शीर्षतः । नि । पत्ततः । आऽध्यः । नि । तिरामि । ते ।
देवाः । प्र । हिनुत । स्मरम् । असौ । माम् । अनु । शोचतु ॥ १ ॥
अनुऽमते । अनु । इदम् । मन्यस्व । आऽकूते । सम् । इदम् । नमः ।
देवाः । प्र । हिनुत । स्मरम् । असौ । माम् । अनु । शोचतु ॥ २ ॥
यत् । धावसि । त्रिऽयोजनम् । पञ्चऽयोजनम् । आश्विनम् ।
ततः । त्वम् । पुनः । आऽअयसि । पुत्राणाम् । नः । असः । पिता ॥ ३ ॥

( १३२ ) द्वात्रिंशदुत्तरशततमं सूक्तम्

(१-५) [illegible] सूक्तस्याथर्वा ऋषिः । स्मरो देवता । (१) [illegible], (२, ४) द्वितीयचतुर्थ्योर्विराड् महाबृहती, (३) तृतीयाया भुरिग्बृहती, (५) पञ्चम्यास्त्रिपदा महाबृहती छन्दांसि ॥

यं देवाः स्मरमसिञ्चन्नप्स्व१न्तः शोशुचानं सहाध्या । तं ते तपामि वरुणस्य धर्मणा ॥१॥
यं विश्वे देवाः स्मरमसिञ्चन्नप्स्व१न्तः शोशुचानं सहाध्या ।
तं ते तपामि वरुणस्य धर्मणा ॥२॥
यमिन्द्राणी स्मरमसिञ्चदप्स्व१न्तः शोशुचानं सहाध्या ।
तं ते तपामि वरुणस्य धर्मणा ॥३॥

यम् । देवाः । स्मरम् । असिञ्चन् । अप्ऽसु । अन्तः । शोशुचानम् । सह । आध्या ।
तम् । ते । तपामि । वरुणस्य । धर्मणा ॥ १ ॥
यम् । विश्वे । देवाः । स्मरम् । असिञ्चन् । अप्ऽसु । अन्तः । शोशुचानम् । सह ।
आध्या । तम् । ते । तपामि । वरुणस्य । धर्मणा ॥ २ ॥
यम् । इन्द्राणी । स्मरम् । असिञ्चत् । अप्ऽसु । अन्तः । शोशुचानम् । सह । आध्या ।
तम् । ते । तपामि । वरुणस्य । धर्मणा ॥ ३ ॥



## Smara : Passion and Love

**VI.131.1** Out of your head, out of your feet, I draw away your pangs of love. O bounties of Nature, send forth passionate Love. May that man burn with desire for me.

**VI.131.2** May you assent to this (my wish) O assent divine (anumati); O determination, may you bend this together. O bounties of Nature, send forth passionate Love. May that man burn with desire for me.

**VI.131.3** Even if you run away three leagues, or even five leagues, one day's journey of a horse, from there (tatah) you shall come back and shall be the father of our sons. (putrāṇām pitā).

## Smara : Passionate Love

**VI.132.1** The passionate love, which the bounties of Nature have poured into waters (i.e., semen), burning friendly and accompanied by pains of longing - that I heat up for you, according to the law of the venerable Lord (Law-maker).

**VI.132.2** The passionate love, which all the bounties of Nature have poured into waters (i.e., semen), burning fiercely and accompanied by pains of longing - that I heat up for you, according to the law of the venerable Lord (Law-maker).

**VI.132.3** The passionate love, which the power of the resplendent Lord (Indrānī) has poured into waters (i.e., semen), burning fiercely and accompanied by pains of longing - that I heat up for you, according to the law of the venerable Lord (Law-maker).

यमिन्द्राग्नी स्मरमसिञ्चतामप्स्व१न्तः शोशुचानं सहाध्या ।
तं ते तपामि वरुणस्य धर्मणा ॥४॥
यं मित्रावरुणौ स्मरमसिञ्चतामप्स्व१न्तः शोशुचानं सहाध्या ।
तं ते तपामि वरुणस्य धर्मणा ॥५॥

यम् । इन्द्राग्नी इति । स्मरम् । असिञ्चताम् । अप्ऽसु । अन्तः । शोशुचानम् । सह । आध्या । तम् । ते । तपामि । वरुणस्य । धर्मणा ॥ ४ ॥

यम् । मित्रावरुणौ । स्मरम् । असिञ्चताम् । अप्ऽसु । अन्तः । शोशुचानम् । सह । आध्या । तम् । ते । तपामि । वरुणस्य । धर्मणा ॥ ५ ॥

( १३३ ) त्रयस्त्रिंशदुत्तरशततमं सूक्तम्
(१-५) पञ्चर्चस्यास्य सूक्तस्यागस्त्य ऋषिः । मेखला देवता । (१) प्रथमर्चो भुरिक्त्रिष्टुप्, (२, ५) द्वितीयापञ्चम्योरनुष्टुप्, (३) तृतीयायास्त्रिष्टुप्, (४) चतुर्थ्याश्च जगती छन्दांसि ॥

य इमां देवो मेखलामाबबन्ध यः संननाह य उ नो युयोज ।
यस्य देवस्य प्रशिषा चरामः स पारमिच्छात्स उ नो वि मुञ्चात् ॥१॥
आहुतास्यभिहुत ऋषीणामस्यायुधम् ।
पूर्वा व्रतस्य प्राश्नती वीरघ्नी भव मेखले ॥२॥
मृत्योरहं ब्रह्मचारी यदस्मि निर्याचन्भूतात्पुरुषं यमाय ।
तमहं ब्रह्मणा तपसा श्रमेणानयैनं मेखलया सिनामि ॥३॥

यः । इमाम् । देवः । मेखलाम् । आऽबबन्ध । यः । सम्ऽननाह । यः । ऊं इति । नः । युयोज । यस्य । देवस्य । प्रऽशिषा । चरामः । सः । पारम् । इच्छात् । सः । ऊं इति । नः । वि । मुञ्चात् ॥ १ ॥

आऽहुता । असि । अभिऽहुता । ऋषीणाम् । असि । आयुधम् ।
पूर्वा । व्रतस्य । प्रऽअश्नती । वीरऽघ्नी । भव । मेखले ॥ २ ॥

मृत्योः । अहम् । ब्रह्मऽचारी । यत् । अस्मि । निःऽयाचन् । भूतात् । पुरुषम् । यमाय । तम् । अहम् । ब्रह्मणा । तपसा । श्रमेण । अनया । एनम् । मेखलया । सिनामि ॥ ३ ॥



**VI.132.4** The passionate love, which the Lord resplendent and adorable, has poured into waters (i.e., semen), burning fiercely and accompanied by pains of longing - that I heat up for you, according to the law of the venerable Lord (Law-maker).

**VI.132.5** The passionate love, which the Lord friendly and venerable, has poured into waters (i.e., semen), burning fiercely and accompanied by pains of longing - that I heat up for you, according to the law of the venerable Lord (Law-maker).

### Mekhalā : Belt or Girdle

**VI.133.1** The enlightened one, who has bound this (belt or girdle), who has fastened it tight, who has deployed us, at whose direction we move up, may he wish us to reach our goal (the other shore); may he free us from it as well.

**VI.133.2** You are offered; you are praised. You are the weapon of the seers. Having achieved success in the work undertaken previously, may you, O belt, be the slayer of the heroes (among our enemies).

**VI.133.3** I, who am the disciple of death, begging from people, a man for the controller (death). That man I bind fast to knowledge, to austerity, and to hard labour with this belt.

श्रद्धाया दुहिता तपसोधि जाता स्वस ऋषीणां भूतकृतां बभूव ।
सा नो मेखले मतिमा धेहि मेधामथो नो धेहि तप इन्द्रियं च ॥४॥
यां त्वा पूर्वे भूतकृत ऋषयः परिबेधिरे ।
सा त्वं परि ष्वजस्व मां दीर्घायुत्वाय मेखले ॥५॥

श्रद्धायाः । दुहिता । तपसः । अधि । जाता । स्वसा । ऋषीणाम् । भूतऽकृताम् । बभूव ।
सा । नः । मेखले । मतिम् । आ । धेहि । मेधाम् । अथो इति । नः । धेहि । तपः । इन्द्रियम् । च ॥
याम् । त्वा । पूर्वे । भूतऽकृतः । ऋषयः । परिऽबेधिरे ।
सा । त्वम् । परि । स्वजस्व । माम् । दीर्घायुऽत्वाय । मेखले ॥ ५ ॥

( १३४ ) चतुस्त्रिंशदुत्तरशततमं सूक्तम्
(१-३) तृचस्यास्य सूक्तस्य शुक्र ऋषिः । वज्रो देवता । (१) प्रथमर्चः परानुष्टुप् त्रिष्टुप्,
(२) द्वितीयाया भुरिक्त्रिपदा गायत्री, (३) तृतीयायाश्चानुष्टुप् छन्दांसि ॥

अयं वज्रस्तर्पयतामृतस्यावास्य राष्ट्रमप हन्तु जीवितम् ।
शृणातु ग्रीवाः प्र शृणातूष्णिहा वृत्रस्येव शचीपतिः ॥१॥
अधरोधर उत्तरेभ्यो गूढः पृथिव्या मोत्सृपत् ।
वज्रेणावहतः शयाम् ॥२॥
यो जिनाति तमन्विच्छ यो जिनाति तमिज्जहि ।
जिनतो वज्र त्वं सीमन्तमन्वञ्चमनु पातय ॥३॥

अयम् । वज्रः । तर्पयताम् । ऋतस्य । अव । अस्य । राष्ट्रम् । अप । हन्तु ।
जीवितम् । शृणातु । ग्रीवाः । प्र । शृणातु । उष्णिहाः । वृत्रस्यऽइव । शचीऽपतिः ॥
अधरःऽअधरः । उत्तरेभ्यः । गूढः । पृथिव्याः । मा । उत् । सृपत् ।
वज्रेण । अवऽहतः । शयाम् ॥ २ ॥
यः । जिनाति । तम् । अनु । इच्छ । यः । जिनाति । तम् । इत् । जहि ।
जिनतः । वज्र । त्वम् । सीमन्तम् । अन्वञ्चम् । अनु । पातय ॥ ३ ॥



**VI.133.4** You are the daughter of faith (śraddhāyā duhitā), born of austerity; you have become the sister of seers, the creators of beings. As such, O girdle (mekhalā), may you bestow on us thought and wisdom and then bless us with understanding, fervor and stamina.

**VI.133.5** O you girdle (mekhalā), whom the ancient seers, the creators of beings, girdled around them, may you, the same, embrace me for a long life.

### Vajra : A lamantine Bolt

**VI.134.1** May this thunder-bolt support the right. May this over-throw his (enemy's) kingdom, and take away his life. May this tear the necks and tear the napes, as the Lord of actions tears those of the nescience.

**VI.134.2** Lower and lower than his superiors, may he go underground. May he not rise on the earth. Smitten with thunder-bolt, may he lie down.

**VI.134.3** May you seek him out who causes harm. May you strike him dead who causes harm. Whoever cause harm, O thunder-bolt, may you make his head to fall down straight away.

( १३५ ) पञ्चत्रिंशदुत्तरशततमं सूक्तम्

(१–३) तृचस्यास्य सूक्तस्य शुक्र ऋषिः । वज्रो देवता । अनुष्टुप् छन्दः ॥

यदश्नामि बलं कुर्व इत्थं वज्रमा ददे ।
स्कन्धानमुष्य शातयन्वृत्रस्येव शचीपतिः ॥१॥
यत्पिबामि सं पिबामि समुद्र इव संपिबः ।
प्राणानमुष्य संपाय सं पिबामो अमुं वयम् ॥२॥
यद्गिरामि सं गिरामि समुद्र इव संगिरः ।
प्राणानमुष्य संगीर्य सं गिरामो अमुं वयम् ॥३॥

यत् । अश्नामि । बलम् । कुर्वे । इत्थम् । वज्रम् । आ । ददे ।
स्कन्धान् । अमुष्य । शातयन् । वृत्रस्यऽइव । शचीऽपतिः ॥ १ ॥
यत् । पिबामि । सम् । पिबामि । समुद्रःऽइव । समऽपिबः ।
प्राणान् । अमुष्य । समऽपाय । सम् । पिबामः । अमुम् । वयम् ॥ २ ॥
यत् । गिरामि । सम् । गिरामि । समुद्रःऽइव । समऽगिरः ।
प्राणान् । अमुष्य । समऽगीर्य । सम् । गिरामः । अमुम् । वयम् ॥ ३ ॥

( १३६ ) षट्त्रिंशदुत्तरशततमं सूक्तम्

(१–३) तृचस्यास्य सूक्तस्य वीतहव्य ऋषिः । नितत्नीवनस्पतिर्देवता । (१, ३) प्रथमातृतीययोर्ऋचोरनुष्टुप्, (२) द्वितीयाया एकावसाना द्विपदा साम्नी बृहती छन्दसी ॥

देवी देव्यामधि जाता पृथिव्यामस्योषधे ।
तां त्वा नितत्नि केशेभ्यो दृंहणाय खनामसि ॥१॥
दृंह प्रत्नाञ्जनयाजाताञ्जातानु वर्षीयसस्कृधि ॥२॥
यस्ते केशोऽवपद्यते समूलो यश्च वृश्चते ।
इदं तं विश्वभेषज्याभि षिञ्चामि वीरुधा ॥३॥

देवी । देव्याम् । अधि । जाता । पृथिव्याम् । असि । ओषधे ।
ताम् । त्वा । निऽतत्नि । केशेभ्यः । दृंहणाय । खनामसि ॥ १ ॥
दृंह । प्रत्नान् । जनय । अजातान् । जातान् । ऊं इति । वर्षीयसः । कृधि ॥ २ ॥
यः । ते । केशः । अवऽपद्यते । सऽमूलः । यः । च । वृश्चते ।
इदम् । तम् । विश्वऽभेषज्या । अभि । सिञ्चामि । वीरुधा ॥ ३ ॥



## Vajra : Bolt

**VI.135.1** What I eat (aśnāmi) , may I turn that into strength, and may I take up the adamantine weapon, cleaving the shoulders of such and such person, like the Lord of actions those of the nescience (vṛtra).

**VI.135.2** What I drink (pibāmi), I drink completely, drink to the finish like ocean. Drinking up the life of such and such (amuṣya) person, may we drink such and such person to the finish.

**VI.135.3** What I swallow (girāmi), I swallow to the finish, swallow to the finish like ocean. Swallowing up the life of such and such person, may we swallow such and such person to the finish.

## Nitatni Vanaspati - herb

**VI.136.1** O medicinal herb, you are divine and are grown on the divine earth. As such, O herb spreading downwards, we dig you up for strengthening the hair (keśebhyo dṛṁhaṇāya) (Nitatni : spreading down-wards)

**VI.136.2** Make old hair firm; make new ones spring out, which are yet unborn; make longer the already growing ones.

**VI.136.3** Your hair, which falls off, or is torn with its root-that I wet with (the sap of) this plant, a cure-all remedy (panecea). (visva-bheṣajyā).

( १३७ ) सप्तत्रिंशदुत्तरशततमं सूक्तम्

(१-३) त्र्यृचस्यास्य सूक्तस्य वीतहव्य ऋषिः । नितत्नीवनस्पतिर्देवता । अनुष्टुप् छन्दः ॥

यां जमदग्निरखनद्दुहित्रे केशवर्धनीम् ।
तां वीतहव्य आभरदसितस्य गृहेभ्यः ॥१॥
अभीशुना मेया आसन्व्यामेनानुमेयाः ।
केशा नडा इव वर्धन्तां शीर्ष्णस्ते असिताः परि ॥२॥
दृंह मूलमाग्रं यच्छ वि मध्यं यामयौषधे ।
केशा नडा इव वर्धन्तां शीर्ष्णस्ते असिताः परि ॥३॥

याम् । जमत्ऽअग्निः । अखनत् । दुहित्रे । केशऽवर्धनीम् ।
ताम् । वीतऽहव्यः । आ । अभरत् । असितस्य । गृहेभ्यः ॥ १ ॥
अभीशुना । मेयाः । आसन् । विऽआमेन । अनुऽमेयाः ।
केशाः । नडाःऽइव । वर्धन्ताम् । शीर्ष्णः । ते । असिताः । परि ॥ २ ॥
दृंह । मूलम् । आ । अग्रम् । यच्छ । वि । मध्यम् । यमय । ओषधे ।
केशाः । नडाःऽइव । वर्धन्ताम् । शीर्ष्णः । ते । असिताः । परि ॥ ३ ॥

( १३८ ) अष्टात्रिंशदुत्तरशततमं सूक्तम्

(१-५) पञ्चर्चस्यास्य सूक्तस्याथर्वा ऋषिः । नितत्नीवनस्पतिर्देवता । (१-२, ४-५) प्रथमाद्वितीया-चतुर्थीपञ्चमीनामृचामनुष्टुप्, (३) तृतीयायाश्च पथ्यापङ्क्तिश्छन्दसी ॥

त्वं वीरुधां श्रेष्ठतमाभिश्रुतास्योषधे । इमं मे अद्य पूरुषं क्लीबमोपशिनं कृधि ॥१॥
क्लीबं कृध्योपशिनमथो कुरीरिणं कृधि । अथास्येन्द्रो ग्रावभ्यामुभे भिनत्त्वाण्ड्यौ ॥२॥

त्वम् । वीरुधाम् । श्रेष्ठऽतमा । अभिऽश्रुता । असि । ओषधे ।
इमम् । मे । अद्य । पुरुषम् । क्लीबम् । ओपशिनम् । कृधि ॥ १ ॥
क्लीबम् । कृधि । ओपशिनम् । अथो इति । कुरीरिणम् । कृधि ।
अथ । अस्य । इन्द्रः । ग्रावऽभ्याम् । उभे इति । भिनत्तु । आण्ड्यौ ॥ २ ॥



## Nitatni Vanaspati (spreading down ward)

VI.137.1 The hair-lengthening herb, which the sage of burning fires (jamadagni) digs up for her daughter's locks grow long, that the sage of exhausted supplies teares for the homes of the white-haired (asitāḥ) one.

VI.137.2 The hair, that used to be measured with finger, became so long as to be measured with stretched out arms. May black hair spring all over your head and grow like reeds.

VI.137.3 May you, O herb, make firm the root; prolong the ends; and stretch the middle portion. May black hair spring all over your head and grow like reeds.

## Vanaspati (herb)

VI.138.1 O herb, you are the best and well renowned of all the plants. May you make this man of mine impotent and female today.

VI.138.2 May you make him impotent and eunuch and female; then make him wearing a woman's head-dress (kurīriṇam) - may the resplendent one crush both of his testicles (āṇḍyau) with two pressing-stones (grāva-bhyām)

क्लीबं क्लीबं त्वाकरं वध्रे वध्रिं त्वाकरमरसारसं त्वाकरम्।
कुरीरमस्य शीर्षणि कुम्बं चाधिनिदध्मसि ॥३॥
ये ते नाड्यौ देवकृते ययोस्तिष्ठति वृष्ण्यम्।
ते ते भिनद्मि शम्र्ययामुष्या अधि मुष्कयोः ॥४॥
यथा नडं कशिपुने स्त्रियो भिन्दन्त्यश्मना।
एवा भिनद्मि ते शेपोऽमुष्या अधि मुष्कयोः ॥५॥

क्लीब। क्लीबम्। त्वा। अकरम्। वध्रे। वध्रिम्। त्वा। अकरम्। अरस। अरसम्। त्वा। अकरम्।
कुरीरम्। अस्य। शीर्षणि। कुम्बम्। च। अधिऽनिदध्मसि ॥ ३ ॥
ये इति। ते। ताडभ्यौ। देवकृते इति देवऽकृते। ययोः। तिष्ठति। वृष्ण्यम्।
ते इति। ते। भिनद्मि। शम्यया। अमुष्याः। अधि। मुष्कयोः ॥ ४ ॥
यथा। नडम्। कशिपुने। स्त्रियः। भिन्दन्ति। अश्मना।
एव। भिनद्मि। ते। शेपः। अमुष्याः। अधि। मुष्कयोः ॥ ५ ॥

( १३९ ) एकोनचत्वारिंशदुत्तरशततमं सूक्तम्

(१-५) अथर्वस्वास्य सूक्तस्याथर्वा ऋषिः। वनस्पतिर्देवता। (१) प्रथमर्चस्त्र्यवसाना षट्पदा विराड्जगती, (२-५) द्वितीयादिचतसृणामनुष्टुप् छन्दसी॥

न्यस्तिका रुरोहिथ सुभगंकरणी मम। शतं तव प्रतानास्त्रयस्त्रिंशन्नितानाः।
तया सहस्रपर्ण्या हृदयं शोषयामि ते ॥१॥
शुष्यतु मयि ते हृदयमथो शुष्यत्वास्यम्।
अथो नि शुष्य मां कामेनाथो शुष्कास्या चर ॥२॥

निऽअस्तिका। रुरोहिथ। सुभगम्ऽकरणी। मम। शतम्। तव। प्रऽतानाः। त्रयःऽत्रिंशत्।
निऽतानाः। तया। सहस्रऽपर्ण्या। हृदयम्। शोषयामि। ते ॥ १ ॥
शुष्यतु। मयि। ते। हृदयम्। अथो इति। शुष्यतु। आस्यम्।
अथो इति। नि। शुष्य। माम्। कामेन। अथो इति। शुष्कऽआस्या। चर ॥ २ ॥



**VI.138.3** O impotent, I have made you impotent. O eunuch (vadhri), I have made you eunuch. O semenless, I have made you semenless. We put a woman's head-dress (kurīriṇam) on his head and the hair-ornament (kumbam) also.

**VI.138.4** Your two vessels (nāḍyau) made by the bounties of Nature (devakṛte), and in which the semen (vṛṣṇyam) lies - crush those both of yours, placed just above the two testicles, on this stone with this stick. (śamyayā amuṣyā)

**VI.138.5** Just as women-folk crash a reed with a stone for making a mat, even so I crush your male organ (śepaḥ), placed just above the two testicles (muṣkayoḥ) on this stone with this stick.

### Vanaspati (herb)

**VI.139.1** O herb, dispeller of misfortune and bestower of good fortune on me, you have grown up here. A hundred are your out-stretching branches and thirty-three down-stretching tendencies. With such a herb of a thousand leaves, I make your heart parch.

**VI.139.2** May your heart parch for me; then may your mouth be dry. Then making me parched with passion, may you go about dry-mouthed.

संवननी समुष्पला बभ्रु कल्याणि सं नुद ।
अमूं च मां च सं नुद समानं हृदयं कृधि ॥३॥
यथोदकमपपुषोपशुष्यत्यास्यम् ।
एवा नि शुष्य मां कामेनाथो शुष्कास्या चर ॥४॥
यथा नकुलो विच्छिद्य संदधात्यहिं पुनः ।
एवा कामस्य विच्छिन्नं सं धेहि वीर्यावति ॥५॥

सम्ऽवननी । सम्ऽउष्पला । बभ्रु । कल्याणि । सम् । नुद । अमूम् ।
च । माम् । च । सम् । नुद । समानम् । हृदयम् । कृधि ॥ ३ ॥
यथा । उदकम् । अपपुषः । अपऽशुष्यति । आस्यम् ।
एव । नि । शुष्य । माम् । कामेन । अथो इति । शुष्कऽआस्या । चर ॥ ४ ॥
यथा । नकुलः । विऽछिद्य । सम्ऽदधाति । अहिम् । पुनः ।
एव । कामस्य । विऽछिन्नम् । सम् । धेहि । वीर्यऽवति ॥ ५ ॥

(१४०) चत्वारिंशदुत्तरशततमं सूक्तम्
(१–३) त्र्यृचस्यास्य सूक्तस्याथर्वा ऋषिः । ब्रह्मणस्पतिर्मन्त्रोक्ता वा देवताः । (१) प्रथमर्चः उरोबृहती,
(२) द्वितीयाया उपरिष्टाज्ज्योतिष्मती त्रिष्टुप्, (३) तृतीयायाश्चास्तारपङ्क्तिश्छन्दांसि ॥

यौ व्याघ्राववरूढौ जिघत्सतः पितरं मातरं च ।
तौ दन्तौ ब्रह्मणस्पते शिवौ कृणु जातवेदः ॥१॥
व्रीहिमत्तं यवमत्तमथो माषमथो तिलम् ।
एष वां भागो निहितो रत्नधेयाय दन्तौ मा हिंसिष्टं पितरं मातरं च ॥२॥
उपहूतौ सयुजौ स्योनौ दन्तौ सुमङ्गलौ ।
अन्यत्र वां घोरं तन्वः परैतु दन्तौ मा हिंसिष्टं पितरं मातरं च ॥३॥

यौ । व्याघ्रौ । अवऽरूढौ । जिघत्सतः । पितरम् । मातरम् । च ।
तौ । दन्तौ । ब्रह्मणः । पते । शिवौ । कृणु । जातऽवेदः ॥ १ ॥
व्रीहिम् । अत्तम् । यवम् । अत्तम् । अथो इति । माषम् । अथो इति । तिलम् । एषः । वाम् ।
भागः । निऽहितः । रत्नऽधेयाय । दन्तौ । मा । हिंसिष्टम् । पितरम् । मातरम् । च ॥ २ ॥
उपऽहूतौ । सऽयुजौ । स्योनौ । दन्तौ । सुऽमङ्गलौ ।
अन्यत्र । वाम् । घोरम् । तन्वः । परा । एतु । दन्तौ । मा । हिंसिष्टम् । पितरम् । मातरम् । च ॥३॥



**VI.139.3** O brown-coloured, beautiful herb, you are a reconciler, and arouser. May you urge her to meet; may urge me to meet. May you make our hearts alike. (samānam hṛdayam kṛdhi)

**VI.139.4** Just as the mouth of a man, not drinking water, gets parched, so making me parched with passion, may you go about dry-mouthed.

**VI.139.5** Just as a mungoose, having cut a snake into pieces, puts it together again, so, O powerful herb, may you join together our severed passionate love.

## Brahmanaspatih

**VI.140.1** The two tiger-like teeth protruding downwards, that desire to eat the father and the mother - those two teeth, O Lord of knowledge, O knower of all, may you make benign.

**VI.140.2** May you eat rice (vrīhi); may you eat barley (yava), also black beans (māsa) and sesamum (tila). This is the share allotted to both of you for happy result. O you two teeth (dantau), may you not injure the father and the mother.

**VI.140.3** Praise be to the two teeth, friendly, bringing happiness and very propitious. May the ferocity of your selves go away else where. May you not, O teeth, injure the father and the mother.

( १४१ ) एकचत्वारिंशदुत्तरशततमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य विश्वामित्र ऋषिः । अश्विनौ देवते । अनुष्टुप् छन्दः ।

वायुरेनाः समाकरत्त्वष्टा पोषाय ध्रियताम् ।
इन्द्र आभ्यो अधि ब्रवद्रुद्रो भूम्ने चिकित्सतु ॥१॥
लोहितेन स्वधितिना मिथुनं कर्णयोः कृधि ।
अकर्तामश्विना लक्ष्म तदस्तु प्रजया बहु ॥२॥
यथा चक्रुर्देवासुरा यथा मनुष्या उत ।
एवा सहस्रपोषाय कृणुतं लक्ष्माश्विना ॥३॥

वायुः । एनाः । सम्ऽआकरत् । त्वष्टा । पोषाय । ध्रियताम् ।
इन्द्रः । आभ्यः । अधि । ब्रवत् । रुद्रः । भूम्ने । चिकित्सतु ॥ १ ॥
लोहितेन । स्वऽधितिना । मिथुनम् । कर्णयोः । कृधि ।
अकर्ताम् । अश्विना । लक्ष्म । तत् । अस्तु । प्रऽजया । बहु ॥ २ ॥
यथा । चक्रुः । देवऽअसुराः । यथा । मनुष्याः । उत ।
एव । सहस्रऽपोषाय । कृणुतम् । लक्ष्म । अश्विना ॥ ३ ॥

( १४२ ) द्विचत्वारिंशदुत्तरशततमं सूक्तम्

(१-३) तृचस्यास्य सूक्तस्य विश्वामित्र ऋषिः । वायुर्देवता । अनुष्टुप् छन्दः ।

उच्छ्रयस्व बहुर्भव स्वेन महसा यव ।
मृणीहि विश्वा पात्राणि मा त्वा दिव्याशनिर्वधीत् ॥१॥
आशृण्वन्तं यवं देवं यत्र त्वाच्छावदामसि ।
तदुच्छ्रयस्व द्यौरिव समुद्र इवैध्यक्षितः ॥२॥
अक्षितास्त उपसदोऽक्षिताः सन्तु राशयः ।
पृणन्तो अक्षिताः सन्त्वत्तारः सन्त्वक्षिताः ॥३॥

उत् । श्रयस्व । बहुः । भव । स्वेन । महसा । यव ।
मृणीहि । विश्वा । पात्राणि । मा । त्वा । दिव्या । अशनिः । वधीत् ॥ १ ॥
आऽशृण्वन्तम् । यवम् । देवम् । यत्र । त्वा । अच्छऽआवदामसि ।
तत् । उत् । श्रयस्व । द्यौःऽइव । समुद्रःऽइव । एधि । अक्षितः ॥ २ ॥
अक्षिताः । ते । उपऽसदः । अक्षिताः । सन्तु । राशयः ।
पृणन्तः । अक्षिताः । सन्तु । अत्तारः । सन्तु । अक्षिताः ॥ ३ ॥

॥ इति षष्ठं काण्डम् ॥

[ षष्ठकाण्डे सूक्तानि १४२, मन्त्राः ४५४ ]



## Aśvin - Pair

**VI.141.1** May the cosmic wind collect them (samākarat) (group -wise), may the universal architect look after their nourishment; may the resplendent Lord bless and encourage them; may the Lord of cures (Rudra) treat them (cikitsatu), so that they may multiply.

**VI.141.2** With a red blade make a pair of marks on their both the ears. May the twins divine (physicians and surgeons) make the mark. May that make them multiply with progeny (to large numbers).

**VI.141.3** Such marks, as the enlightened ones and the life-savers have been making, and as the men also make, so, O twins divine, may you make the mark, so that these may multiply into thousands.

## Vāyu

**VI.142.1** Grow high, O barley; become plentiful with your good quality (own vitality). May you fill all (our) containers. May the celestial thunder-bolt not kill you.

**VI.142.2** Where we praise you, the divine barley, that listens to us, there may you grow up just like heaven, like the ocean, may you be inexhaustible.

**VI.142.3** May inexhaustible be your servings (upasadas); inexhaustible be your gathered heaps. May inexhaustible be your bestowers, and inexhaustible be the partakers.

-------

**Here ends Kāṇḍa VI**
**Hymns 142 ; Verses 454**